प्रस्तावसदृशं वाक्यं स्वभावसदृशं प्रियम् ।
आत्मशक्तिसमं कोपं यो जानाति स पण्डितः ॥ ९७ ॥

अनाहूतो विशेद्यस्तु अपृष्टो बहु भाषते ।
आत्मानं मन्यते प्रीतं भूपालस्य स दुर्मतिः ॥ ९८ ॥

शत्रोरपि गुणा वाच्या दोषा वाच्या गुरोरपि ।
सर्वदा सर्वयत्नेन पुत्रे शिष्ये हरिं (हितं?) वदेत् ॥ ९९ ॥

पृष्ठतस्सेवयेदर्कं जठरेण हुताशनम् ।
स्वामिनं सर्वभावेन परलोकममायया ॥ १०० ॥

हीनसेवा न कर्तव्या कर्तव्यो महदाश्रयः ।
पयोऽपि शौण्डिनीहस्ते मद्यमित्यभिधीयते ॥ १०१ ॥

महानप्यल्पतां याति निर्गुणे गुणविस्तरः ।
आधाराधेयभावेन गजेन्द्र इव दर्पणे ॥ १०२ ॥

मांसमूत्रपुरीषास्थिनिर्मितेऽस्मिन्कलेवरे ।
विनश्वरे विहायास्थां यशः पालय हे सखे ॥ १०३ ॥

अनध्वन्याः काव्येष्वलसगतयश्शास्त्रगहने-
ष्वदुःखज्ञा वाचां परिणतिषु मूकाः परगुणे ।
विदग्धानां गोष्ठीष्वकृतपरिचर्याश्च खलु ये
भवेयुस्ते किं वा परभणितिकण्डूतिनिकषाः ॥ १०४ ॥

दोषान्धकारव्यवसारणेन गुणाम्बुजोन्मीलननित्यदक्षाः ।
सन्तः प्रबन्धं मम शोधयन्तु लोकं मयूखा इव चण्डरश्मेः ॥ १०५ ॥

कवितामृतकूपं हि शिशूनां ज्ञानवृद्धये ।
सत्कवेः पद्यमाकृष्य तेने **श्रीगौरमोहनः** ॥ १०६ ॥

---

CC-0.Central Sanskrit University.Digitized by eGangotri

## ॥ नराभरणम्* ॥

स्वहस्तेनाचरेद्दानं परहस्तेन मर्दनम् ।
भार्याहस्तेन ताम्बूलं मातृहस्तेन भोजनम् ॥ १ ॥

नरस्याभरणं रूपं रूपस्याभरणं गुणः ।
गुणस्याभरणं ज्ञानं ज्ञानस्याभरणं क्षमा ॥ २ ॥

न्यायो राजविभूषणं वितरणं पाणिद्वयोर्भूषणं
लज्जा स्त्रीजनभूषणं सरसता सख्युस्सदा भूषणम् ।
विद्या विप्रविभूषणं हरिकथा श्रोत्रद्वयोर्भूषणं
सत्पुत्रः कुलभूषणं सुकविता वाचस्सदा भूषणम् ॥ ३ ॥

नभोभूषा पूषा कमलवनभूषा मधुकरो
वचोभूषा सत्यं वरयुवतिभूषा सुगुणता ।
मनोभूषा मैत्री मधुसमयभूषा मधुभृतः
सतां भूषा शान्तिः सकलजनभूषा वितरणम् ॥ ४ ॥

असम्पन्नः कथं बन्धुरसहिष्णुः कथं प्रभुः ।
अनात्मवित्कथं विद्वान् असन्तुष्टः कथं सुखी ॥ ५ ॥

शाठ्येन मित्रं कलुषेण धर्मं परावमानेन समृद्धिभावम् ।
सुखेन विद्यां परुषेण नारीं वाञ्छन्ति ये नूनमपण्डितास्ते ॥ ६ ॥

दरिद्रस्य द्विभार्यत्वं पथि क्षेत्रं द्विधा कृषिः ।
प्रातिभाव्यं च साक्षित्वं पञ्चानर्थास्स्वयंकृताः ॥ ७ ॥

---

*मद्रपुरी-राजकीयकोशागारस्थमातृकातः । इदमपि नानाकविकृतिभ्यः संकलितम् ।

CC-0.Central Sanskrit University.Digitized by eGangotri

यस्य माता गृहे नास्ति भार्या चाप्रियभाषिणी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ८ ॥

सन्देहं स्वल्पमाश्रित्य साधवो यान्ति दूष्यताम् ।
रात्रौ वल्मीकसम्पर्कात् रज्जुस्सर्पायते खलु ॥ ९ ॥

हतं वित्तमदानेन हता नारी निरङ्कुशा ।
ब्रह्मस्वेन हतो राजाऽनग्निना ब्राह्मणो हतः ॥ १० ॥

आलस्येन हता विद्या आलापेन कुलाङ्गना ।
अल्पबीजं हतं क्षेत्रं हतं सैन्यमनायकम् ॥ ११ ॥

तत्त्वज्ञस्य तृणं शास्त्रं वीरस्य रमणी तृणम् ।
विरक्तस्य तृणं नारी निःस्पृहस्य नृपास्तृणम् ॥ १२ ॥

किं पौरुषैस्त्यक्तपरोपकारैः
सौभाग्यहीनैरपि किं सुरूपैः ।
किं वा धनैस्सद्भिनियोगशून्यैः
वाग्भिश्च किं विष्णुकथाविरक्तैः (क्तौ?) ॥ १३ ॥

अर्थेन किं कृपणहस्तगतेन तेन
रूपेण किं गुणपराक्रमवर्जितेन ।
ज्ञानेन किं बहुजनैः कृतमत्सरेण
मित्रेण किं व्यसनकालपराङ्मुखेन ॥ १४ ॥

सूर्योदयस्फुरणहानि तमिस्रजालं सुस्निग्धबन्धुजनदर्शनहानि दुःखम् ।
नारीकटाक्षपतनावधि पुंसि धैर्यं नारायणस्मरणपर्यवसायि पापम् ॥ १५ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

यस्तु पर्यटते देशान् यस्तु सेवेत पण्डितान् ।
तस्य विस्तारिता बुद्धिः तैलबिन्दुरिवाम्भसि ॥ १६ ॥

स्नानमूलमिदं कर्म कृषिमूलमिदं धनम् ।
आज्ञामूलमिदं राज्यं पत्नीमूलमिदं गृहम् ॥ १७ ॥

यत्र विद्यागमो नास्ति यत्र नास्ति धनागमः ।
यत्र देहसुखं नास्ति न तत्र निमिषं वसेत् ॥ १८ ॥

लक्ष्मीश्चेन्न सरस्वती तदुभयं यद्यस्ति नोदारता
तत्रापि त्रितयं घटेत कतिचित्पुण्यैरगण्यैरपि ।
सौजन्यं न विजृम्भते तदपि चेन्नास्त्येव धर्मे मतिः
तत्सर्वं जगदीश्वरस्य कृपया त्वय्येव सन्दृश्यते ॥ १९ ॥

सरस्वती स्थिता वक्त्रे लक्ष्मीर्वक्षसि ते स्थिता ।
कीर्तिः किं कुपिता राजन् येन देशान्तरं गता ॥ २० ॥

श्रुत्वा च दूरे भवदीयकीर्तिं कर्णौ च तुष्टौ न तु चक्षुषी मे ।
तयोर्विवादं परिहर्तुकामः समागतोऽहं भवदीक्षणाय ॥ २१ ॥

यो न ददाति न भुङ्क्ते विभवे सति तस्य तद्द्रव्यम् ।
तृणकृतकृत्रिमपुरुषो [ऽयं] रक्षति सस्यमिव परस्यार्थे ॥ २२ ॥

चकोरा इव शीतांशुं चातका इव तोयदम् ।
चञ्चरीका इवाम्भोजं द्रष्टुं त्वामुत्सुका वयम् ॥ २३ ॥

को वा जन्मान्तरे पूर्वं धर्मस्सम्पादितो मया ।
यत्सतां दर्शनं प्राप्तं सर्वस्फीतफलप्रदम् ॥ २४ ॥

7

CC-0.Central Sanskrit University.Digitized by eGangotri

इयमेव हि सत्त्वशालिनां महतां कापि कठोरचित्तता ।
उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥ २५ ॥

उदये सविता ताम्रः ताम्र एवास्तमेति च ।
सम्पद्विपदवस्थासु महतामेकरूपता ॥ २६ ॥

किं वात्र चित्रं यत्सन्तः परानुग्रहतत्पराः ।
न हि स्वदेहशैत्याय जायते चन्दनद्रुमः ॥ २७ ॥

साधोः परुषवाक्येन मनो नो याति विक्रियाम् ।
न हि तापयितुं शक्यः सागराम्भस्तृणोल्कया ॥ २८ ॥

प्रसादो यस्य वदने कृपा यस्यावलोकने ।
वचने यस्य माधुर्यं स साक्षात्पुरुषोत्तमः ॥ २९ ॥

कुपितोऽपि गुणायैव गुणवान्भवति ध्रुवम् ।
स्वभावमधुरं क्षीरं मथितं हि रसोत्तरम् ॥ ३० ॥

गुणाः कुर्वन्ति दूतत्वं सदुक्त्या सारवेदिनः ।
केतकीगन्धमाघ्राय स्वयमायान्ति षट्पदाः ॥ ३१ ॥

सन्त एव सतां नित्यमापत्तरणहेतवः ।
गजानां पङ्कलग्नानां गजा एव धुरन्धराः ॥ ३२ ॥

कराद्गलितखाद्यस्य का हानिः करिणो भवेत् ।
पिपीलिका तु तेनैव बिभर्ति स्वकुटुम्बकम् ॥ ३३ ॥

सत्सु कार्यवतां पुंसामलमेवाग्रतस्स्थितिः ।
वाग्वृत्तिरधिका सा चेत्करोत्युभयलाघवम् ॥ ३४ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

प्रसादो निष्फलो यस्य कोपश्चास्ति निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्डं पतिमिव स्त्रियः ॥ ३५ ॥

सविधे निवसेन्मुहुर्बुधानां मतिमन्दोऽपि भवेदगाधसत्त्वः ।
मलयाचलकल्पिताधिवासः पिचुमन्दोऽपि पटीरतां प्रयाति ॥ ३६ ॥

महान्त एव तुष्यन्ति सदुक्त्या सारवेदिनः ।
स्वल्पाः कूपाः प्रवर्धन्ते ज्योत्स्नया किं समुद्रवत् ॥ ३७ ॥

अपि सर्वविदो न शोभते वचनं श्रोतरि बोधवर्जिते ।
परिणेतरि नष्टलोचने सफलः किन्नु कलत्रविभ्रमः ॥ ३८ ॥

अव्युत्पन्ने श्रोतरि वक्तृत्वमनर्थकं पुंसाम् ।
नेत्रविहीने भर्तरि लावण्यमनर्थकं स्त्रीणाम् ॥ ३९ ॥

यो यत्र सततं भुङ्क्ते यत्र याति निरन्तरम् ।
स तत्र लघुतामेति बृहस्पतिसमो बुधः ॥ ४० ॥

नाभ्युत्थानक्रिया यत्र नालापो मधुराक्षरम् ।
गुणदोषकथा नैव स स्वर्गोऽपि न गम्यताम् ॥ ४१ ॥

अहो दुर्जनसर्पस्य सर्पस्य महदन्तरम् ।
कर्णमन्यस्य दशति अन्यः प्राणैः वियुज्यते ॥ ४२ ॥

करोति स्वमुखेनैव बहुधान्यस्य खण्डनम् ।
नमः पतनशीलाय खलाय मुसलाय च ॥ ४३ ॥

उच्चासनगतो नीचः नीच एव न चोत्तमः ।
प्रासादशिखरस्थोऽपि काकः किं गरुडायते ॥ ४४ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

उत्तमैस्स्वीकृतो नीचः नीच एव न चोत्तमः ।
भैरवाधिष्ठितश्श्वा तु कदाचिन्न तु केसरी ॥ ४५ ॥

असतां धर्मबुद्धिश्चेत् सतां सन्तापकारणम् ।
उपोषितस्य व्याघ्रस्य पारणं पशुमारणम् ॥ ४६ ॥

यथा गजाः परिश्रान्ताः तरुच्छायां समाश्रिताः ।
विश्राम्य तद्द्रुमं हन्ति तथा नीचसमागमः ॥ ४७ ॥

लघुना सह संवासो लाघवस्यैव कारणम् ।
शुष्कालाबोश्च संसर्गात् लोहमुत्प्लवतेऽम्भसि ॥ ४८ ॥

अहमिहैव वसन्नपि तावकः त्वमपि तत्र वसन्नपि मामकः ।
न तनुसङ्गम एव (सु)सङ्गमः हृदयसङ्गम एव (सु)सङ्गमः ॥ ४९ ॥

दूरस्थोऽपि न दूरस्थो यो यस्य हृदये वसेत् ।
यो यस्य हृदये नास्ति समीपस्थोऽपि दूरतः ॥ ५० ॥

मातेव रक्षति पितेव हिते नियुङ्क्ते
कान्तेव चाभिरमयत्यपनीय खेदम् ।
कीर्तिं च दिक्षु विमलां वितनोति लक्ष्मीं
किं किं न साधयति कल्पलतेव विद्या ॥ ५१ ॥

संभ्रमस्स्नेहमाख्याति वपुराख्याति भोजनम् ।
आचारः कुलमाख्याति देशमाख्याति भाषणम् ॥ ५२ ॥

विद्याहीनस्य विप्रस्य विडम्बाय गुणान्तरम् ।
परिधानविहीनस्य परिकर्मान्तरं तथा ॥ ५३ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

सदा वक्रस्सदा क्रूरः सदा पूजामपेक्षते ।
कन्याराशिगतो नित्यं जामाता दशमो ग्रहः ॥ ५४ ॥

अल्पाश्रयं समासाद्य महानप्यल्पको भवेत् ।
गजेन्द्रः पर्वताकारो यथा दर्पणमाश्रितः ॥ ५५ ॥

असहायस्समर्थोऽपि तेजस्वी किं करिष्यति ।
रामस्सुग्रीवसाहाय्यात् लङ्कां निर्दग्धवान्पुरा ॥ ५६ ॥

अस्त्यद्यापि चतुस्समुद्रपरिखापर्यन्तमुर्वीतलं
सन्त्यन्येऽपि विदग्धकेलिरसिकाः केचित्क्वचिद्भूभुजः ।
एकस्तत्र निरादरो यदि भवेत् अन्यो भवेत्सादरः
वाग्देवी वदनाम्बुजे यदि भवेत् को नाम दीनो जनः ॥ ५७ ॥

पात्रमपात्रीकुरुते दहति गुणं स्नेहमाशु नाशयति ।
अमले मलं नियच्छति दीपज्वालेव खलजने मैत्री ॥ ५८ ॥

चिन्तासमं नास्ति शरीरशोषणं क्षुधासमं नास्ति शरीरपीडनम् ।
मातुस्समं नास्ति शरीरपोषणं विद्यासमं नास्ति शरीरभूषणम् ॥ ५९ ॥

वितरति फणिलोकं विद्रुतानां नृपाणा-
ममरभुवनलक्ष्मीमाहवे सम्मुखानाम् ।
अपि च पदनतानामाधिपत्यं जगत्यां
किमिह वितरणं ते कीर्तयामि क्षितीन्द्र ॥ ६० ॥

महतामवलोकनं परं क्षणमात्रेण फलं प्रदास्यति ।
नहुषो विजहौ भुजङ्गतां यदुसूनोरवलोकनेन यत् ॥ ६१ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

अन्यत्र भीष्माद्गाङ्गेयात् अन्यत्र च हनूमतः ।
हरिणीखुरमात्रेण चर्मणा मोहितं जगत् ॥ ६२ ॥

उत्कृष्टमध्यमनिकृष्टजनेषु मैत्री यद्वच्छिलासु सिकतासु जलेषु रेखा ।
वैरं क्रमादधममध्यमसज्जनेषु यद्वच्छिलासु सिकतासु जलेषु रेखा ॥ ६३ ॥

विश्वामित्राश्वपश्वादीन् (?) पारयत्यप्सु कर्दमे ।
वार्धक्ये तमसि श्रान्ते यष्टिरिष्टेव सुप्रजाः ॥ ६४ ॥

पापिनां पापगणनां यः करोति नराधमः ।
सत्यं चेदर्धमाप्नोति मिथ्या चेद् द्विगुणं भवेत् ॥ ६५ ॥

अन्नदाहे हरेन्मांसमम्बुदाहे च शोणितम् ।
कामदाहे हरेन्नेत्रमनिद्रा रोगकारिणी ॥ ६६ ॥

तलोदरीणां तरुणीमणीनां
तटाकजं तालपयोधराणाम् ।
ताद्रूप्यमाप्तुं तरुणैः (तरणौ?) तदास्यं (स्यैः?)
तपः परं तामरसं तनोति ॥ ६७ ॥

दिव्यं चूतफलं प्राप्य गर्वं नायाति कोकिलः ।
पीत्वा कर्दमपानीयं भेको बकबकायते ॥ ६८ ॥

वित्तेन हीनं पुरुषं त्यजन्ति पुत्राश्च दाराश्च सहोदराश्च ।
तं वित्तवन्तं पुनरेव यान्ति तस्मात्तु वित्तं पुरुषस्य बन्धुः ॥ ६९ ॥

वाङ्माधुर्य्यात्सर्वलोकप्रियत्वं वाक्पारुष्यात्सर्वलोकापकारी ।
किं वा लोके कोकिलेनोपनीतं को वा लोके रासभेनापराधः ॥ ७० ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

हंसो विभाति सरसीरुहवृन्दमध्ये
सिंहो विभाति हिमवद्गिरिगह्वरेषु ।
जात्यो विभाति तुरगो रणरङ्गमध्ये
विद्वान् विभाति पुरुषेषु विचक्षणेषु ॥ ७१ ॥

किं केतकी फलति किं पनसस्य पुष्पं
किं नागवल्ल्यपि तु पुष्पफलैरुपेता ।
कस्यापि कोऽप्यतिशयोऽस्ति न (स?) येन सद्भिः
सङ्ग्रा(गृ?)ह्यते जगति याति यतः प्रतीतिः(तिम्?) ॥ ७२ ॥

विद्वानेव विजानाति विद्वज्जनपरिश्रमम् ।
न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥ ७३ ॥

अल्पीयसामेव हि जन्मभूमेः
त्यागप्रमादो विदुषां न चास्ति ।
अब्धेरुपेता मणयो भजन्ते
राज्ञां शिरः काकमुखानि भेकाः ॥ ७४ ॥

अन्तस्सन्तोषचित्तानां संपदस्ति पदे पदे ।
अन्तर्मलिनचित्तानां सुखं स्वप्नेऽपि दुर्लभम् ॥ ७५ ॥

नक्रस्स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
स एव प्रच्युतस्स्थानात् शुनापि परिभूयते ॥ ७६ ॥

पुत्रं च धर्मविमुखं भार्यां चाप्रियवादिनीम् ।
अब्रह्मण्यं च राजन्यं त्यजेत्सद्योऽन्यथा पतेत् ॥ ७७ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

वैद्यं पापरतं नटं कुनृपतिं स्वाध्यायहीनं द्विजं
युद्धे कापुरुषं हयं गतरयं क्रुद्धं परिव्राजकम् ।
राजानं च कुमन्त्रिभिः परिवृतं देशं च सोपप्लवं
भार्यां यौवनगर्वितां पररतां मुञ्चन्ति शीघ्रं बुधाः ॥ ७८ ॥

कृपादीनं त्यजेदर्थं निर्वेदं ब्राह्मणं त्यजेत् ।
त्यजेत्क्रुद्धमुखीं भार्यां ज्ञानहीनं गुरुं त्यजेत् ॥ ७९ ॥

मुक्ताफलैः किं वनमर्कटस्य मृष्टान्नदानेन तु गर्दभस्य ।
अन्धस्य दीपाद्बधिरस्य गीतात् मूर्खस्य किं धर्मकथाप्रसङ्गैः ॥ ८० ॥

सर्वौषधीनामुदकं प्रधानं सर्वे (षण्णां?) रसानां लवणं प्रधानम् ।
सर्वेन्द्रियाणां नयनं प्रधानं भवेन्नदीनामुदकं प्रधानम् ॥ ८१ ॥

आशाया दासा ये दासास्ते सर्वलोकस्य ।
आशा दासी येषां तेषां दासायते लोकः ॥ ८२ ॥

महत्सन्दर्शने प्राप्ते समस्तनियमैरलम् ।
तालवृन्तेन किं कार्यं पार्श्वस्थे मलयानिले ॥ ८३ ॥

वक्रापि पङ्किलभवापि दुरासदापि
व्यालाश्रितापि विफलापि सकण्टकापि ।
गन्धेन बन्धुरसि केतकि सर्वजन्तोः
एको गुणः खलु निहन्ति समस्तदोषान् ॥ ८४ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

सद्वृत्तश्शुचिरङ्कवल्कलधरस्स्नातोद्गतस्सागरात्
प्रोञ्छन् ध्वान्तमधः करैर्द्विजपतिः देवानपि प्रीणयन् ।
यत्कोकान् रमणीभिरेष रहयन्नु (त्यु ?)त्काननेनैनसा
प्राप्नोति स्वकलावि(यो)गमहता (मथवा ?) दोषो
- बलीयान्गुणः (णात्) ॥ ८५ ॥

अखण्डितं च क्रमुकं चूर्णं तु रसवर्जितम् ।
भूमौ निपतितं पत्रं शक्रस्यापि श्रियं हरेत् ॥ ८६ ॥

अनिधाय मुखे पत्रं प्रगे खादति यो नरः ।
सप्तजन्मदरिद्रत्वमन्ते विष्णुस्थितिश्च न ॥ ८७ ॥

श्रीमतो भिक्षुकस्यापि हृद्यं वैवाहिकं गृहम् ।
क्षीरार्णवे हरिश्शेते हरश्शेते महोदधौ (हिमालये?) ॥ ८८ ॥

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा ।
यश्चैनं गन्धमाल्याद्यैस्सर्वस्य कटुरेव सः ॥ ८९ ॥

परैरालिङ्गिता यान्ति प्रस्खलन्ति पदे पदे ।
अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव ॥ ९० ॥

दुर्जनस्सज्जनात्पूर्वं पूज्यतां यातु तेन किम् ।
गुदं प्रक्षालनात्पूर्वमाननादधिकं किमु ॥ ९१ ॥

लुब्धस्य वित्तं रणशूरशस्त्रं पतिव्रतायाः कुचकुम्भमध्यम् ।
व्याघ्रस्य चर्म शबरी (चमरं?) मृगाणामेतानि (?) दत्तं (दग्धं?)
मरणान्तकाले ॥ ९२ ॥

असभ्यः पिशुनश्चैव कृतघ्नो दीर्घवैरिणः (रकः?) ।
चत्वारः कर्मचण्डालाः जातिचण्डालपञ्चमः (माः?) ॥ ९३ ॥



CC-0.Central Sanskrit University.Digitized by eGangotri

दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत् ।
सत्यपूतां वदेद्वाणीं श्रद्धापूतं धनं दिशेत् ॥ ९४ ॥

अधोमुखस्स्वयं रन्ध्री रन्ध्रान्वेषणतत्परः ।
लालनाद्वृद्धिमाप्नोति शिश्नप्रायो हि दुर्जनः ॥ ९५ ॥

तित्तिरिश्च वराहश्च महिषः कुञ्जरस्तथा ।
सेनापत्येन (-पतिश्च ?) राजानं (-जा च ?) षडेते
स्वर्ग (स्वैर ?)गामिनः ॥ ९६ ॥

सम्मुखात्सूर्यः सुप्रीतः भाषणेन सरस्वती ।
स्वागतेनाग्निः सुप्रीतः आसनेन शतक्रतुः ॥ ९७ ॥

दशवत्ससमा धेनुः दशधेनुसमो वृषः ।
दशोक्षकसमो दन्ती दशदन्तिशत(समः)क्रतुः ॥ ९८ ॥

दशक्रतुसमा कन्या दशकन्यासमा भुवः ।
भूमेर्दानात्परं नास्ति विद्यादानं ततोऽधिकम् ॥ ९९ ॥

अल्पप्रभोस्तु सेवायां भुक्तिमात्रं प्रयोजनम् ।
अनुग्रहम (-ग्रहे त्व ?) जामूल्यं निग्रहं (हे ?) प्राणसङ्कटम् ॥ १०० ॥

जलूकं क्रुत्त (रक्त ?) साध्यं च ज्वरसाध्यं च लङ्घनम् ।
वमनं कफसाध्यं च पित्तसाध्यं विरेचनम् ॥ १०१ ॥

उत्साहसम्पन्नमदीनसत्त्वं क्रियाविधिज्ञं व्यवसायिनं च ।
शूरं कृतज्ञं दृढसौहृदं च लक्ष्मीस्स्वयं वाञ्छति वासहेतोः ॥ १०२ ॥

सर्ववाद्यमयी घण्टा सर्वद्रव्यमयं जलम् ।
सर्वपुष्पमयी दूर्वा सर्वदेवमयो हरिः ॥ १०३ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

मातृहीनशिशुजीवनं वृथा शान्तिहीनतपसः फलं वृथा ।
कान्तिहीननवयौवनं वृथा दन्तहीनरसभोजनं वृथा ॥ १०४ ॥

करानीतं पटानीतं स्त्रिया नीतं तथैव च ।
एरण्डपत्रैरानीतं देवतानां च नार्हति ॥ १०५ ॥

आरोग्यं भास्करादिच्छेत् श्रियमिच्छेद्धुताशनात् ।
ज्ञानं महेश्वरादिच्छेत् मोक्षमिच्छेज्जनार्दनात् ॥ १०६ ॥

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।
ते पुनन्त्युरुकालेन दर्शनादेव साधवः ॥ १०७ ॥

कुभोजनं चोष्णतया विराजते कुवस्त्रता शुभ्रतया विराजते ।
दरिद्रता धीरतया विराजते कुरूपिता शीलतया विराजते ॥ १०८ ॥

हंसो न भाति बलिभोजनवृन्दमध्ये
गोमायुमण्डलगतो न विभाति सिंहः ।
जात्यो न भाति तुरगः खरयूथमध्ये
विद्वान्न भाति पुरुषेषु निरक्षरेषु ॥ १०९ ॥

काव्यैरुपहता वेदाः पुत्रा जामातृभिर्हताः ।
अश्वैरुपहता गावः पण्यस्त्रीभिः कुलाङ्गनाः ॥ ११० ॥

युक्तियुक्तमुपादेयं वचनं बालकादपि ।
अन्यद्तृष्टमिव त्याज्यमप्युक्तं पद्मजन्मना ॥ १११ ॥

किंक्षणस्य कुतो विद्या किं(क)णस्य कुतो धनम् ।
क्षणशः कणशश्चैव विद्यामर्थं च साधयेत् ॥ ११२ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

आयं पश्यन् व्ययं कुर्वन् (र्यात् ?) आयादल्पतरं व्ययम् ।
आयाभावे व्ययं कुर्वन् कुबेरोऽपि विनश्यति ॥ ११३ ॥

वरं दरिद्रोऽपि विचक्षणो जनो न चार्थवान् विश्रुतजातिवर्जितः ।
सलोचनः क्षीणपथो (पटो ?) वि (ऽपि?) शोभते न नेत्रहीनः
शकटै (कटकैः?) रलङ्कृतः ॥ ११४ ॥

सहोक्तिप्रत्युक्तिस्सरससहितैस्साक्षरजनैः
प्रभोर्भावज्ञस्य प्रभवितुरुदारस्य भजनम् ।
परीरम्भः कुम्भप्रतिभटकुचानां मृगदृशा-
मसारे संसारे जगति खलु सारत्रयमिदम् ॥ ११५ ॥

इह भोगं यशस्त्रीति (: प्रीतिं ?) सभासु बहुमान्यताम् ।
दद्यात्परत्र सुगतिं विद्याधनमनुत्तमम् ॥ ११६ ॥

अनक्षरज्ञेन जनेन सख्यं संभाषणं दुष्प्रभुसेवनं च ।
आलिङ्गनं लम्बपयोधराणां प्रत्यक्षदुःखं त्रयमेव भूमौ ॥ ११७

न चोरहार्यं न च राजहार्यं
विदेशयाने न च भारकार्यम् ।
व्यये कृते नित्यमुपैति नित्यम् (वृद्धिं)
विद्याधनं सर्वधनप्रधानम् ॥ ११८ ॥

अनन्तशास्त्रं बहु वेदितव्यम् अल्पश्च कालो बहवश्च विघ्नाः ।
यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमिश्रम् ॥ ११९ ॥

सिद्धमन्नं फलं पक्कं नारीप्रथमयौवनम् ।
सुभाषितं च ताम्बूलं सद्यो गृह्णाति बुद्धिमान् ॥ १२० ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

चोरद्रव्यविभागं च दूतद्रव्यं सुभाषितम् ।
उत्क्रोशं (त्कोचं) प्रतिदानं च सद्यो गृह्णाति बुद्धिमान् ॥ १२१ ॥

सुभाषितपरिभ्रष्टं ताम्बूलरसवर्जितम् ।
यन्मुखं वेदविभ्रष्टं तन्मुखं बिलमुच्यते ॥ १२२ ॥

परोपकृतिशीलानामपि(वि)दूरे हि सम्पदः ।
मथ्नन् सुरार्थमम्भोधिं श्रियं लेभे परः पुमान् ॥ १२३ ॥

वेदविद्याव्रतस्नाते शिष्टे च गृहमागते ।
नन्दन्त्योषधयस्सर्वा यास्यामः परमां गतिम् ॥ १२४ ॥

नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते ।
रोदित्यन्नं हि दातव्यं किं मया दुष्कृतं कृतम् ॥ १२५ ॥

कदाचित्कवचं भेद्यं नाराचेन शरेण वा ।
अपि वर्षशताघाते ब्राह्मणाशीर्न भिद्यते ॥ १२६ ॥

तैलाभ्यङ्गं द्विजोच्छिष्टं विप्राणामङ्गमर्दनम् ।
गवां कण्डूयमानेन (नं चैव?) कोटियज्ञफलं लभेत् (लप्रदम्?) ॥ १२७ ॥

विषस्य तैलस्य न किञ्चिदन्तरं
मृतस्य सुप्तस्य न किञ्चिदन्तरम् ।
ऋणस्य दासस्य न किञ्चिदन्तरं
द्विजस्य दैवस्य न किञ्चिदन्तरम् ॥ १२८ ॥

पङ्कजं च पलाशं च नद्यां च करवीरकम् ।
चम्पकं पाटली चैव नीलोत्पलमिति स्मृतम् ॥ १२९ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

अहिंसा प्रथमं पुष्पं द्वितीये (पुष्पमि?) न्द्रियनिग्रहम् (हः) ।
तृतीयं तु दया पुष्पं तुरीयं दानपुष्पकम् ॥ १३० ॥

पञ्चमं शीलपुष्पं च षष्ठं कोपस्य निग्रहः ।
सप्तमं सत्यपुष्पं च अष्टमं विष्णुदर्शनम् ॥ १३१ ॥

मात्रा विहीनस्तु रसैर्विनष्टः पित्रा विहीनस्तु कलाविनष्टः ।
भ्रात्रा विहीनस्तु बलैर्विनष्टः दारैर्विहीनस्तु शरीरनष्टः ॥ १३२ ॥

सम्पत्सु महतां चित्तं भवत्युत्पलकोमलम् ।
आपत्सु च महाशैलशिलासङ्घातकर्कशम् ॥ १३३ ॥

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे ।
अम्भोनिधिर्वहति दुस्सहबाडबाग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ १३४ ॥

बहवः फणिनो लोके भेकभक्षणतत्पराः ।
एक एव हि शेषोऽयं धरणीधरणक्षमः ॥ १३५ ॥

चन्द्रः क्षयी प्रकृतिवक्रतनुः कलङ्की
दोषाकरः स्फुरति मित्रविपत्तिकाले ।
हाहा तथापि शिरसा ध्रियते हरेण
नैवाश्रितेषु महतां गुणदोषचिन्ता ॥ १३६ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

उडुगणपरिवारो नायकोऽप्योषधीना-
मयममृतशरीरः कान्तियुक्तोऽपि चन्द्रः ।
भवति विगतरश्मिर्मण्डलं प्राप्य भानोः
परसदननिविष्टः को लघुत्वं न याति ॥ १३७ ॥

पापात् निवारयति योजयते हिताय
गुह्यं च गूहति गुणान्प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ १३८ ॥

अब्धी रत्नमधो धत्ते धत्ते च शिरसा तृणम् ।
अब्धेरेव हि दोषोऽयं रत्नं रत्नं तृणं (तृणम्) ॥ १३९ ॥

स्वयममृतनिधानो नायकोऽप्योषधीनां
शतभिषगनुयातश्शम्भुमूर्द्धावतंसः ।
परिहरति न चैनं राजयक्ष्मा शशाङ्कं
हतविधिपरिपाकः केन वा लङ्घनीयः ॥ १४० ॥

दाता न दापयति दापयिता न दत्ते
यो दानदापनपरो मधुरं न वक्ति ।
तद्दानदापनमनोहरभाषणानि
त्रीण्यप्यमूनि खलु सत्पुरुषेषु भान्ति ॥ १४१ ॥

अनक्षरं यस्य जनस्य भाषणम् अनादरं यस्य प्र (वि ?) भुत्वसेवनम् ।
आलिङ्गनं लम्बपयोधराणां प्रत्यक्षदुःखं त्रयमेव भूमौ ॥ १४२ ॥[1]

---

१. ११७-तमः श्लोको दृश्यताम् ।

CC-0.Central Sanskrit University.Digitized by eGangotri

चिन्तायाश्च चितायाश्च बिन्दुमात्रं विशेषतः ।
चिता दहति निर्जीवं चिन्ता जीवन्तमप्यहो ॥ १४३ ॥

बृहत्यां च युवत्यां च सर्वाङ्गं मधुरायते ।
तयोरपि विशेषेण नालमूलोरुमूलयोः ॥ १४४ ॥

अर्थेन किं कृपणहस्तमुपागतेन
शास्त्रेण किं चलधिया भृशमादृतेन ।
रूपेण किं गुणसमूहविवर्जितेन
स्नेहेन किं व्यसनकालपराङ्मुखेन ॥ १४५ ॥

प्राणमेव परित्यज्य मानमेवाभिरक्षतु ।
अनित्यम(श्चा)ध्रुवं(वः) प्राणं(णो) मानमाचन्द्रतारकम् ॥ १४६ ॥

काममपि धत्ते सूकररूपी काममपि रहितामिच्छति भूपः ।
केनाकारि (च) मन्मथजननं केन विराजति तरुणीवदनम् ॥ १४७ ॥
॥ कुङ्कुमेन ॥

आत्मबुद्ध्या सुखीभूया गुरुबुद्ध्या विशेषतः ।
बहुबुद्ध्या विनाशस्स्यात्स्त्रीबुद्ध्या प्रलयो भवेत् ॥ १४८ ॥

त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिःपक्षैस्त्रिभिर्दिनैः ।
अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते ॥ १४९ ॥

ब्राह्मणानामसंघातात् सर्पाणामतिनिद्रया ।
गजानां बुद्धिदौर्बल्यात् जगज्जीवति निर्भयम् ॥ १५० ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

स्वदत्तां परदत्तां वा यो हरेत्तु वसुन्धराम् ।
षष्टिर्वर्षसहस्राणि विष्ठायां जायते कृमिः ॥ १५१ ॥

अधर्मादार्जितं द्रव्यमल्पकालं तु तिष्ठति ।
ततस्सपत्नमयते समूलं तेन नश्यति ॥ १५२ ॥

अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम् ।
आरम्भस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥ १५३ ॥

सर्वज्ञमज्ञं च वदन्ति लोके सन्तस्तदा (सदा?) तस्य चरित्रलोकात् ।
न हि स्वयं वक्तुमलं समर्थः को वा चरेत्कुत्सितवृत्तिमार्यः ॥ १५४ ॥

केचिज्जनाः पण्डितमानिनो हि भवन्ति दुर्युक्तिकथाप्रसङ्गे ।
क्षणार्द्धमप्यूहति सच्चरित्रं श्लाध्यं विदुस्सत्पुरुषः (षं?) स्वबुद्ध्या ॥ १५५ ॥

कटीतटानि कुञ्जेषु सञ्चरन्वातकुञ्जरः ।
हे(ए)रण्डतैलसिंहस्य गन्धमाघ्राय धावति ॥ १५६ ॥

हंससम्पदवतंसितं सरः
स्वीकृतं सुभगमानिभिर्बकैः ।
द्यौ(:) मणि(?) द्युमणिभूषित (ता?) क्षण-
ज्योतिषेति हसितं नु कैतकैः ॥ १५७ ॥

अध्वा जरा मनुष्याणामनध्वा वाजिनां जरा ।
अमैथुनं जरा स्त्रीणां वस्त्राणामातपो जरा ॥ १५८ ॥

पिता च ऋणवान् शत्रुः माता च व्यभिचारिणी ।
भार्या रूपवती शत्रुः पुत्रश्शत्रुरपण्डितः ॥ १५९ ॥



CC-0.Central Sanskrit University.Digitized by eGangotri

द्रविणमापदि भूषणमुत्सवे
शरणमाहवे (मात्मभये) निशि दीपिका ।
बहुविधाभ्युपकारविधिक्षमो
(भवति) कोऽपि भवानिव सन्मणिः ॥ १६० ॥

कच्चित्सहस्रान्मूर्खाणामेकमिच्छसि पण्डितम् ।
पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्निःश्रेयसं महत् ॥ १६१ ॥

एकः खलोऽपि यदि नाम भवेत्सभायां
व्यर्थीकरोति विदुषामखिलं प्रयासम् ।
एकाऽपि पूर्णमुदरं मधुरैः पदार्थैः
आलोड्य रेचयति हन्त न मक्षिका किम् ॥ १६२ ॥

महाराज श्रीमन् जगति यशसा ते धवलिते
पयःपारावारं परमपुरुषोऽयं मृगयते ।
कपर्दी कैलासं कुलिशभृदभौमं करिवरं
कलानाथं राहुः कमलभवनो हंसमधुना ॥ १६३ ॥

अपूर्वेयं धनुर्विद्या भवतश्शिक्षिता कुतः ।
मार्गणौघस्समायाति गुणो याति दिगन्तरम् ॥ १६४ ॥

नाविद्यमानं कर्णोऽपि ददातीति मया श्रुतम् ।
अभयेन भयं दत्तमरातिभ्यः कथं त्वया ॥ १६५ ॥

राजन् कनकवर्षाणि त्वयि सर्वत्र वर्षति ।
अभाग्यच्छत्रसञ्छन्ने मयि नायान्ति बिन्दवः ॥ १६६ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

ईशस्य कण्ठलग्नोऽपि वासुकिर्वायुभोजनः ।
महतां स्थानमाश्रित्य फलं भाग्यानुसा(रतः ?) ॥ १६७ ॥

सर्वदा सर्वदोऽसीति मिथ्या त्वं कथ्यसे बुधैः ।
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥ १६८ ॥

त्वयि दातरि पृथ्वीश रणे वितरणेऽपि च ।
पुनर्देहीति वचनं न प्रत्यर्थिनि नार्थिनि ॥ १६९ ॥

सर्वज्ञ इति लोकोऽयं भवन्तं भाषते मृषा ।
पदमेकं न जानीषे वक्तुं नास्तीति याचके ॥ १७० ॥

राजन् दौवारिकादेव प्राप्तवानस्मि वारणम् ।
मदवारणमिच्छामि त्वत्तोऽहं पृथिवीपते ॥ १७१ ॥

साहित्यार्णवकर्णधार करुणापीयूषवारांनिधे
विद्वच्चातकवारिवाह कमलापर्यङ्कपङ्केरुह ।
त्वां केनोपमिमीमहे त्रिजगति प्राप्तप्रकर्षैः गुणैः
तुल्यं ते नरसिंह पार्थिव वयं कुत्रापि न प्राप्नुमः ॥ १७२ ॥

चन्द्रस्येव तवोदयेन महती श्रीश्चन्द्रिका वर्धतां
(द्वे)ष्टारश्शलभीभवन्तु भवतः तीव्रप्रतापानले ।
त्वद्दोर्दण्डमहाभुजङ्गशिरसि स्थेयादनन्ता चिरं
दिङ्नारीकुचमण्डले तव यशःपूरो वि(ऽपि) हारायताम् ॥ १७३॥

CC-0.Central Sanskrit University.Digitized by eGangotri

स्याद्राजा यदि सुन्दरो नहि यदि स्यात्सुन्दरो निर्गुणः
स्याच्चेत्पूर्णगुणो बलेन रहितः स्याच्चेद्बली कातरः ।
वीरश्चेद्विनयोज्झितः (सविनयः) स्याच्चेन्न दानोत्सुकः
स्याद्राजा (दाता ?) यदि नातिलोक(भ?)विमुखं (खः?)
त्वं चेद्गुणानां निधिः(?) ॥ १७४ ॥

छायाभिः प्रथमं ततश्च कुसुमैः पश्चात्फलैस्स्वादुभिः
प्रीणात्येष तरुर्महानयमिति श्रान्तैस्समाश्रीयते ।
को जानाति तदीयकोटरपुटे प्रत्यग्रहालाहल-
ज्वालाजालजटालपाटलफणः क्रूरः फणी वर्तते ॥ १७५ ॥

निर्जितारिधरणीधरौ भुजौ
वर्जितान्यहरिणीदृशौ दृशौ ।
यस्य दानमहिमाकरौ करौ
संस्कृतार्थवचनोन्मुखं मुखम् ॥ १७६ ॥

गुणिनि गुणज्ञो रमते नागुण(शील)स्य गुणिनि परितोषः ।
अलिरेति वनात्कमलं न दर्दुरस्त्वेकवासोऽपि ॥ १७७ ॥

असन्तुष्टो द्विजो नष्टः सन्तुष्टः क्षत्रियस्तथा ।
सलज्जा गणिका नष्टा पण्यस्त्रीभिः (निर्लज्जा च?) कुलाङ्गना ॥ १७८ ॥

जिह्वा दग्धा परान्नेन हस्तो दग्धः परिग्रहात् ।
मनो दग्धं परस्त्रीभिः ब्रह्मशापः कुतः कलौ ॥ १७९ ॥

अप्सु प्लवन्ते पाषाणाः मानुषा घ्नन्ति राक्षसान् ।
कपयः कर्म कुर्वन्ति कालस्य कुटिला गतिः ॥ १८० ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

मृद्विना मासशौचं स्यात्पक्षे होमः (मं?) तु वर्जयेत् ।
उष्णोदकं सप्तरात्रं द्विजश्शूद्रत्वमाप्नुयात् ॥ १८१ ॥

नैकः पन्थानमागच्छेत् न वसेद्ब्राह्ममन्दिरे ।
जनवासं (-क्यं) च (न?) कर्तव्यं न स्त्रीवाक्यं कदाचन ॥ १८२ ॥

अन्नं मुक्तासुवर्णं द्रवगुणरहितास्स्वर्णपू(रू)पाश्च सूपाः
सामोदाश्शाकभेदाः फलगुडमिलिताः पायसम्....।
यावद्भोज्यं तदाज्यं दधि कठिनतरं नैकरूपास्त्वपूपाः
भुज्यन्ते भूसुरौघैर्महति तव गृहे रामचन्द्रस्य तृप्त्यै ॥ १८३ ॥

अन्नं किंशुकपुष्पपुञ्जसदृशं पाषाणजालैर्युतं
धूम्यं गन्धयुतं च जालमखिलं भग्नाश्च दन्तालयः ।
आज्यं दूरतरं न चापि लवणं न श्रूयते तिन्त्रिणी
भक्ष्याणां वचनं च नास्ति हि सखे तद्भोजनं वर्ण्यये ॥ १८४ ॥

शाकैरनेकैर्नलभीमपाकैः सूपैरपूपैरमृतायमानैः ।
आज्यप्रवाहैश्च दधिप्रवाहैः ते भुञ्जते मानवपुण्यवन्तः ॥ १८५ ॥

रवौ पुष्पं गुरौ दूर्वा भृगौ गोमयमेव च ।
भौमे भूमिं विनिक्षिप्य तैलाभ्यङ्गं समाचरेत् ॥ १८६ ॥

को देशः कुत्र पुर्यां तव वसतिररे किं च गोत्रं च शाखा
का ते किं नाम सत्यं वद किमु पठितं वेदशास्त्रं च किन्तु ।
इत्थं पृष्ट्वा धनाढ्यो वितरति च पुरः काचिकां (काकिणीं?) ब्राह्मणेभ्यो
हृष्टेभ्यस्सर्ववित्तं (वितरति हि भवान्?) दृष्टमात्रेण चित्रम् ॥ १८७ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

ज्ञानवृद्धास्तपोवृद्धाश्शीलवृद्धास्तथैव च ।
सर्वे ते धनवृद्धस्य द्वारे तिष्ठन्ति किंकराः ॥ १८८ ॥

श्रुत्वा वेदमनेकशास्त्रपठनात्(नं?)किं तेन ज्ञानं विना (ज्ञानं विना तेन किं?)
स्नानं तर्पणहोममप्यनुदिनं किं तेन दानं विना ।
गीता(त्वा?) राख(ग)मनेकशास्त्र(ताल?)गणनं किं तेन कण्ठं विना
ताम्बूलादि विभूषणैः(णं?) परिमलैः(लः?) किं तेन
काव्यं [कान्तां ?] विना ॥ १८९ ॥

माषो नं (न?) माषद्रव्यः (व्यं?)स्यात्
सन्ध्यायामेव याचकः (सन्ध्याचमनवाचकः?) ।
करान्तरस्थिता रेखा
माषास्ताः परिकीर्तिताः ॥ १९० ॥

गोकर्णाकृतिहस्तेन माषमग्नजलं पिबेत् ।
तन्न्यूनमधिकं पीत्वा सुरापानसमं पिबेत् (भवेत्?) ॥ १९१ ॥

शब्देनापः पयः पीत्वा शब्देन घृतपायसम् ।
आपोशनं सोमपानं सुरापानसमं भवेत् ॥ १९२ ॥

अतिथिः द्वारि तिष्ठेत आपो गृह्णाति यो नरः ।
आपोशनं सुरापानमन्नं गोमांसभक्षणम् ॥ १९३ ॥

स्नाने दाने जपे होमे स्वाध्याये पितृतर्पणे ।
एकवस्त्रो द्विजः कुर्यात् तत्सर्वं निष्फलं भवेत् ॥ १९४ ॥

स्नानवस्त्रेण यो विप्रः शरीरं परिमार्जयेत् ।
वृथा भवति तत्स्नानं पुनः स्नानेन शुध्यति ॥ १९५ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

स्नानं कृत्वार्द्रशिरसि (सा?) विण्मूत्रं सृजते यदि ।
वृथा भवति तत्स्नानं पुनः स्नानेन शुध्यति ॥ १९६ ॥

रात्रौ भोजनकाले तु यदि दीपो विनश्यति ।
पाणिभ्यां पात्रमादाय गायत्रीं मनसा स्मरेत् ॥ १९७ ॥

एकपङ्क्त्युपविष्टानां विप्राणां सहभोजने ।
यद्येकोऽपि त्यजेदन्नं सर्वैरुच्छिष्टभोजनम् ॥ १९८ ॥

अग्निना भस्मना चैव स्तम्भेन च जलेन च ।
अद्वारेणैव मार्गेण पङ्क्तिदोषो न विद्यते ॥ १९९ ॥

आपोशनमकृत्वा तु यश्चान्नं परिमर्दयेत् ।
मर्दितं चापि तच्चान्नममेध्यं मनुरब्रवीत् ॥ २०० ॥

आसने पादमारोप्य यो भुङ्क्ते स द्विजाधमः ।
मुखेन धमते चान्नं तुल्यं गोमांसभक्षणम् ॥ २०१ ॥

सर्वतीर्थमयी भूमिस्सर्वरत्नसमन्विता ।
सर्वौषधिगुणोपेता किमर्थमुपलेपना (नम्?) ॥ २०२ ॥

इन्द्रस्य वज्रेण हतो वृत्रासुरमहायशाः ।
मेदसा सर्वविच्छिन्नं तदर्थमुपलेपनम् ॥ २०३ ॥

चतुरश्रं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य तु ।
वैश्यस्य वर्तुलाकारं शूद्रस्याभ्युक्षणं तथा ॥ २०४ ॥

ब्रह्मा विष्णुश्च रुद्रश्च श्रीर्हुताशन एव हि ।
मण्डलान्युपजीवन्ति तस्मात्कुर्वीत मण्डलम् ॥ २०५ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

यातुधानपिशाचाश्च क्रूराश्चैव तु राक्षसाः ।
हरन्ति रसमन्नस्य मण्डलेन विवर्जितम् ॥ २०६ ॥

सदण्डं कदलीपत्रं वामभागाग्रं विन्यसेत् ।
दक्षिणेऽग्रं समादाय भुक्त्वा चान्द्रायणं चरेत् ॥ २०७ ॥

आपोशनं चासनं च तैलाभ्यङ्गं तथैव च ।
स्वयं करकृतं चैव आयुःश्रीपुत्रनाशनम् ॥ २०८ ॥

दीपप्रशमनं पुंसां स्त्रीणां कूष्माण्डखण्डनम् ।
अचिरेणैव कालेन वंशच्छेदो भविष्यति ॥ २०९ ॥

अस्नाताशी मलं भुङ्क्ते अजपी पूयभक्षणम् ।
अहुताशी विषं भुङ्क्ते अदाता विषमश्नुते ॥ २१० ॥

ज्ञाननिमित्तं गुरूपदेशः कलहनिमित्तं निष्ठुरवाणी ।
मरणनिमित्तं गुणविपरीतम् उदरनिमित्तं बहुकृतवेषम् ॥ २११ ॥

एकाहं जपहीनस्तु सन्ध्याहीनो दिनत्रयम् ।
द्वादशाहमनग्निस्तु शूद्र एव न संशयः ॥ २१२ ॥

विद्वत्सङ्घे विवाहे च यज्ञे श्रीपतिदर्शने ।
सन्ध्यावन्दनविच्छित्तिः न दोषाय कदाचन ॥ २१३ ॥

पादौ प्रक्षाल्य यच्छेषं तदाचामेन्नराधमः ।
श्वानमूत्रसमं तोयम् (इत्ये)वं मनुरब्रवीत् ॥ २१४ ॥

ओङ्कारः पुरुषः पूर्वः व्याहृतिः प्रकृति(:) स्त्रियः ।
उभयोः करसंयोगे वस्त्रेणाच्छादयेन्नरः ॥ २१५ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः ।
मुक्ताङ्गुष्ठकनिष्ठे तु शिष्टमाचमनं पिबेत् ॥ २१६ ॥

जनिता चोपनेता च यश्च विद्यां प्रयच्छति ।
अन्नदाता भयत्राता पञ्चैते पितरस्स्मृताः ॥ २१७ ॥

गुरुपत्नी राजपत्नी ज्येष्ठपत्नी तथैव च ।
पत्नी माता स्वयं (स्व-) माता (च) पञ्चैता मातरस्स्मृताः ॥ २१८ ॥

पुस्तकेषु च या विद्या परहस्तेषु यद्धनम् ।
युद्धकाले गृहे शस्त्रं त्रीणि कार्यं वृथा (विना?) वृथा ॥ २१९ ॥

मरणान्तानि वैराणि प्रसवान्तं च यौवनम् ।
कुपितं प्रणयान्तं च याचितान्तं च गौरवम् ॥ २२० ॥

अश्वारूढं पयःपानं गजारूढं तु मैथुनम् ।
आन्दोलिकायां मर्दनं च पादचारी (रि?) तु भोजनम् ॥ २२१ ॥

अतिदानाद्धतः कर्णः अतिलोभात्सुयोधनः ।
अतिकामाद्दशग्रीवः अति सर्वत्र वर्जयेत् ॥ २२२ ॥

इङ्गितज्ञा मागधास्स्युः प्रेक्षितज्ञाश्च कोसलाः ।
अर्धोक्ताः कुरुपाञ्चालाः स्पष्टोक्त्या दक्षिणापथाः ॥ २२३ ॥

पद्यमङ्गुलिविच्छेदमुरोविन्यस्तमक्षरम् ।
तन्नामकरणं चैव दास्यमेतच्चतुर्विधम् ॥ २२४ ॥

अभिवादनशीलस्य नित्यं वृद्धोपजी(से)विनः ।
चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशो बलम् ॥ २२५ ॥



CC-0.Central Sanskrit University.Digitized by eGangotri

ततोऽभिवादयेद्विप्रान् श्रोत्रियांश्च गुरूनपि ।
सायं प्रातश्च होतव्यं कर्तव्यञ्चात्मनो हितम् ॥ २२६ ॥

पाषण्डं पतितं व्रात्यं महापातकिनं शठम् ।
....स्थं कृतघ्नं च नाभिवाद्येत्कदाचन ॥ २२७ ॥

कृताभिवादि(द)नं (पूर्वं) यः पुनर्नाभिवादयेत् ।
श्मशाने जायते वृक्षः कङ्कगृध्रोपसेवितः ॥ २२८ ॥

प्रतिपत्पर्व षष्ठी च नवमी द्वादशी तथा ।
दन्तानां काष्ठसंयोगं प्रयत्नेन विवर्जितः (र्जयेत्) ॥ २२९ ॥

खदिरश्च कदम्बश्च सोमबिल्वस्तथैव च ।
उदुम्बररुहश्चैव ये चान्ये पुण्यभूरुहः ॥ २३० ॥

एते प्रशस्ततरवः दन्तधावनकर्मणि ।
कण्टकीक्षीरवृक्षोत्थद्वादशाङ्गुलमव्रणम् ॥ २३१ ॥

कनिष्ठाङ्गुलिवत् स्थूलं पूर्वार्धकृतकुञ्चितम् ।
अभावे दन्तकाष्ठस्य प्रतिषिद्धदिनेऽपि च ।
अपां द्वादशगण्डूषैः मुखशुद्धिर्भविष्यति ॥ २३२ ॥

मूत्रे सम्यक् पुरीषे तु दिवा कुर्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ सन्ध्ययोरुभयोस्तथा ॥ २३३ ॥

दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ।
कुर्यान्मूत्रपुरीषे च रात्रौ चेद्दक्षिणामुखः ॥ २३४ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥ २३५ ॥

अपि सहवसतामसतां जलरुह(जल)वद्भवत्यसंश्लेषः ।
दूरेऽपि सतां वसतां (प्रीतिःकुमु)देन्दुवद्भाति ॥ २३६ ॥

गर्जति शरदि न वर्षति वर्षति वर्षासु निस्स्वनो मेघः ।
नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥ २३७ ॥

अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् ।
सदालोकहितासक्तथा रत्नदीपा इवोत्तमाः ॥ २३८ ॥

(यन्मनीषिपदाम्भोजरजः)कणपवित्रितम् ।
तदेव भवनं नो चेद्भकारस्तत्र लुप्यते ॥ २३९ ॥

श्लोकस्तु श्लोकतामेति यत्र तिष्ठ(न्ति) (साधवः) ।
तैर्विहीने सभामध्ये लकारस्तत्र लुप्यते ॥ २४० ॥

उन्मत्त कण्टकिफलप्रतियोगिबुद्ध्या
वैरं वृथैव कुरुषे पनसेन साकम् ।
सन्तो हसन्ति न भजन्ति भजन्ति चेत्त्वां
भ्रान्ता भवन्ति सहसेति जगत्प्रसिद्धिः ॥ २४१ ॥

सुजनं व्यजनं मन्ये महावंशसमुद्भवम् ।
स्वपरिभ्रमणेनैव तापं हरति देहिनाम् ॥ २४२ ॥

गुणलक्षं परित्यज्य दोषं गृह्णाति दुर्जनः ।
धेनोः पयोधरस्थोऽपि गोपिडो लोहिताशनः ॥ २४३ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

असज्जनेन संसर्गादसत्तां यान्ति साधवः ।
मधुरं शीतलं तोयं पावकं प्राप्य तप्यते ॥ २४४ ॥

दुर्जनभृशसंसर्गात् साधुजनस्तस्य दोषमायाति ।
दशमुखकृतापराधात् अब्धिर्बद्धः शिलाभरैः कीशैः ॥ २४५ ॥

न स्थातव्यं न गन्तव्यं (क्षणमप्यधमैस्सह) ।
पयोऽपि शौण्डिनीहस्ते वारुणीत्यभिधीयते ॥ २४६ ॥

कस्तूरिकां तृणभुजामटवीमृगाणां
निक्षिप्य ना(भिषु चकार) च तान्वधार्हान् ।
मूढो विधिस्सकलदुर्जनसङ्घजिह्वा-
मूलेषु निक्षिपति चेत्सकलोपकारः ॥ २४७ ॥

खलानामलकानां च धृतानां मूर्ध्नि भीरुभिः ।
उपर्युपरि संस्कारात् भूयो भवति वक्रता ॥ २४८ ॥

खलजिह्वा च नौका च प्रतिकूलप्रवर्तिनी ।
प्रतार(णा)य लोकस्य दारुणा केन निर्मिता ॥ २४९ ॥

विषधरतोऽप्यतिविषमः
खल इति न मृषा वदन्ति सन्तोऽपि ।
यदयं नकुलद्वेषी
सकुलद्वेषी पुनः पिशुनः ॥ २५० ॥

खलानां कण्टकानां च द्विविधैव प्रतिक्रिया ।
उपानन्मुखभङ्गो वा दूरतो वा विसर्जनम् ॥ २५१ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

कस्त्वं भद्र खलेश्वरोऽहमिह किं घोरे वने स्थीयते
व्यालव्याघ्रमृगादिभिः(दनः?)प्रह्व(भृः?)तिभिः खाद्योऽहमित्याशया।
दिष्ट्या शालि(न्तिः?)रहो किमध्यवसिता मद्देहमांसाशन-
प्रत्युत्पन्ननृमांसभक्षणरसाः खादस्व (न्तु) सर्वानिति ॥ २५२ ॥

त्वद्विरहमसहमाना निन्दति बाला दिवानिशं शम्भुम्।
राहुमपि रामभद्रं रामानुजमपि च पन्नगारातिम् ॥ २५३ ॥

तन्वङ्ग्या नवसङ्गमे निपुणतां दृष्ट्वान्यथाशङ्किनः
भर्तुश्चित्तमवेक्ष्य सापि चतुरा भित्तौ किमप्यालिखत्।
एकं मत्तमतङ्गजं तदुपरि क्रोधात्पतन्तं शिशुं
सिंहीगर्भविनिस्सृतं पुनरसौ दृष्ट्वा स हृष्टोऽभवत् ॥ २५४ ॥

कचभारात्कुचभारः कुचभाराद्भीतिमेति कचभारः।
कचकुचभाराज्जघनं कोऽयं चन्द्रानने चमत्कारः ॥ २५५ ॥

वदनात्पदयुगलीयं वचनादधरश्च दन्तपङ्क्तिश्च।
कु(क)चतः कुचयुगलीयं लोचनयुगलं च मध्यतस्त्रसति ॥ २५६ ॥

कुसुमे कुसुमोत्पत्तिः श्रूयते न च दृश्यते।
बाले तव मुखाम्भोजे दृष्टमिन्दीवरद्वयम् ॥ २५७ ॥

बाले तवाधरसुधारसपानकाले
चेतो मदीयमभिवाञ्छति शेषभावम्।
आलिङ्गने तव विरोचनपौत्रभावम्
आखण्डलत्वमखिलाङ्गनिरीक्षणेषु ॥ २५८ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

ग्रहणसमयवेला (प्रविश झटिति गेहं) मा बहिस्तिष्ठ बाले
ग्रहणसमयवेला वर्तते शीतरश्मेः ।
तव मुखमकलङ्कं वीक्ष्य राहुश्च नूनं
ग्रसति तव मुखेन्दुं चन्द्रबिम्बं विहाय ॥ २५९ ॥

जाता लता हि शैले जातु लतायां न जायते शैलः ।
सम्प्रति तद्विपरीतं कनकलतायां गिरिद्वयं जातम् ॥ २६० ॥

इन्दिन्दिरो मरन्दे विमुखो यदि किन्तु मधुनि माहात्म्यम् ।
रसिको वाञ्छति नो चेत् ....धरबिम्बमस्य को भूमा (?) ॥ २६१ ॥

अप्यखिलालङ्कारानाकलयन्तोऽपि रसविदश्चित्रम् ।
कलयन्ति सरसकाव्ये नालङ्कारं[1] कदाचिदपि ॥ २६२ ॥

काचिद्बाला रमणवसतिं प्रेषयन्ती करण्डं
सा तन्मूले सभयमलिखद्व्यालमस्योपरिष्टात् ।
गौरीकान्तं पवनतनयं चम्पकं चास्य भावं
पृच्छत्यग्रे सदसि विदुषां मल्लिनाथः कवीन्द्रः ॥ २६३ ॥

शुनां च पिशुनानां च परवेश्मप्रवेशिनाम् ।
प्रयोजनं न जानीमः पात्राणां दूषणादृते ॥ २६४ ॥

जीवनग्रहणे नम्राः गृहीत्वा पुनरुत्थिताः ।
किं कनिष्ठाः किमु ज्येष्ठाः घटीयन्त्रस्य दुर्जनाः ॥ २६५ ॥

यथा ग्रामविशुद्ध्यर्थं सूकरः परिकल्पितः ।
साधुपापविशुद्ध्यर्थं दुर्जनः परिकल्पितः ॥ २६६ ॥

---

१. न अलंबुद्धिमित्यर्थः ।

CC-0.Central Sanskrit University.Digitized by eGangotri

का विद्या कवितां विनाऽर्थिनि जने त्यागं विना श्रीश्च का
कस्सूनुर्विनयं विना कुलवधूः का कान्तभक्तिं विना ।
को धर्मः कृपया विना नरपतिः को नाम नीतिं विना
को भोगो रमणीं विना क्षितितले किं नर्म कीर्तिं विना ॥ २६७॥

कवित्वे वादित्वं कनककुसुमे सौभग(रभ)गुणः
धनित्वे दातृत्वं लिकुचफलमात्रे मधुरता ।
कुलीने सौजन्यं मृगमदरसे रागरचना
प्रभुत्वे विद्वत्त्वं परभृतमुखे मानुषवचः ॥ २६८ ॥

प्रभुर्विवेकी प्रमदा सुशीला
तुरङ्गमश्शस्त्रनिपातधीरः ।
विद्वान् विरागी धनिकः प्रदाता
पञ्चैव रत्नानि भवन्ति लोके ॥ २६९ ॥

मानुष्ये सति दुर्लभा पुरषता पुंस्त्वे पुनर्विप्रता
विप्रत्वे बहुविद्यता न सुलभा विद्यावतोऽर्थज्ञता ।
अर्थज्ञस्य विचित्रवाक्यपटुता तत्रापि लोकज्ञता
लोकज्ञस्य समस्तशास्त्रविदुषो धर्मे मतिर्दुर्लभा ॥ २७० ॥

अश्वश्शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
पुरुषविशेषप्राप्ता भवन्त्ययोग्याश्च योग्याश्च ॥ २७१ ॥

श्वा यद्दशति मनुष्यान् न च तं मनुजाः प्रतिदशन्ति ।
यद्याक्रोशति नीचः न च तं वदतीह सज्जनः किंचित् ॥ २७२ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

न शोभते गुणः पुंसां स्वयं स्वगुणवर्णने ।
यथा सुखं कामिनीनां न स्वयं कुचमर्दने ॥ २७३ ॥

कोदण्डमिक्षुः कुसुमानि बाणः
मौर्वी च मत्ता मधुपालिरेव ।
तथापि कामोऽप्यरुधत्पुरारिं
विनाशकाले विपरीतबुद्धिः ॥ २७४ ॥

मातुलो यस्य गोविन्दः पिता यस्य धनञ्जयः ।
अभिमन्युर्वधं प्राप्तः कालस्य कुटिला गतिः ॥ २७५ ॥

कालस्समविषमकरः कालस्सम्मानपरिभवकरः[1] ।
कालः करोति पुरुषं दातारं याचितारं च ॥ २७६ ॥

यथा वृथा दानविहीनसम्पत् यथा वृथा साक्षिविहीनसंसत् ।
यथा वृथा (ज्ञा?)नविहीनधर्मः तथा वृथा वेदविहीनविप्रः ॥ २७७ ॥

नास्ति विप्रसमं वीर्यं नास्ति व्याधिसमो रिपुः ।
न चापत्यसमः स्निग्धो नास्ति दैवात्परं बलम् ॥ २७८ ॥

आगतव्ययशीलस्य कृशत्वमतिशोभते ।
द्वितीयश्चन्द्रमा वन्द्यो न वन्द्यः पूर्णचन्द्रमाः ॥ २७९ ॥

अस्तीत्येव कृषिं कुर्यात् अस्ति नास्तीति वाणिजम् ।
नास्तीत्येव ऋणं दद्यात् नाहमस्मीति साहसम् ॥ २८० ॥

---

१. अत्र वृत्तभङ्गः । 'परिभवसम्मानकारकः कालः' इति क्वचिन्मुद्रिते ग्रन्थे समीचीनः पाठः ।

CC-0.Central Sanskrit University.Digitized by eGangotri

विद्या विवादाय धनं मदाय प्रज्ञाविशेषः परवञ्चनाय ।
मूर्खस्य साधोर्विपरीतमेतत् ज्ञानाय दानाय च रक्षणाय ॥ २८१ ॥

त्यागिनां किं विचारेण दोषेष्वपि गुणेष्वपि ।
समं वर्षति पर्जन्यः सस्येष्वपि तृणेष्वपि ॥ २८२ ॥

वने कलापी गगने च मेघः सरस्सु पद्मं दिवि तिग्मभानुः ।
चन्द्रोऽन्तरिक्षे कुमुदं सरस्यां दूरेऽपि मैत्री खलु सज्जनानाम् ॥ २८३ ॥

गावो भूयः पशून् पाति(न्ति) रणे भीता नृपानपि ।
तृणमेव परं मन्ये नरादनुपकारिणः ॥ २८४ ॥

दिश वनहरिणीभ्यो वंशकारण्डवीभ्यः
कबलमुपल(म्) कोटिच्छन्नमूलं कुशानाम् ।
शु(श)कयुवतिकपोलापाण्डुताम्बूलवल्ली-
दलद(म)रुणनखाग्रैः पाटिता(तं) वा वधूभ्यः ॥ २८५ ॥

कर्णौ जनन्यः प्रविशालयेयुः
विशालयेदक्षियुगं च काचित् ।
प्रकाममभ्यस्य तु नाम विद्यां
सौजन्यमभ्यासवशाद(शेन)लभ्यम् ॥ २८६ ॥

तृणाल्लघुतरस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ मामयं याचयेदिति ॥ २८७ ॥

याचना हि पुरुषस्य महत्त्वं नाशयत्यखिलमेव तथा हि ।
सद्य एव भगवानपि विष्णुः वामनो भवति याचितुमिच्छन् ॥ २८८ ॥


CC-0.Central Sanskrit University.Digitized by eGangotri

कण्ठादूर्ध्वं विनिर्यान्ति प्राणा याच्ञाक्षरैस्सह ।
ददामीत्यक्षरैर्दातुः पुनश्श्रोत्राद्विशन्ति ते ॥ २८९ ॥

मीयतां कथमपीप्सितमेषां दीयतां द्रुतमयाचितमेव ।
तत्(तं)धिगस्तु कलयन्नपि वाञ्छाम् अर्थिवागवसरं सहते यः ॥ २९० ॥

याचमानज(न)मानसवृत्तेः पूरणाय बत जन्म न यस्य ।
तेन भूमिरतिभारवतीयं न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ २९१ ॥

जलधिजलान्ता नद्यः स्त्रीभेदान्तानि बन्धुहृदयानि ।
पिशुनजनान्तं गुह्यं दुष्पुत्रान्तानि सज्जनकुलानि ॥ २९२ ॥

अप्रार्थितानि दुःखानि यथैवाऽऽयान्ति देहिनाम् ।
सुखान्यपि तथाऽऽयान्ति दैन्यमत्रातिरिच्यते ॥ २९३ ॥

नीचं नमन्ति नियमेन मृषा वदन्ति
भारं वहन्ति धनिनां वशगा भवन्ति ।
पूरं तरन्ति जलधेर्वियदुत्पतन्ति
प्रादेशकुक्षिपरिपूरणपारवश्यात् ॥ २९४ ॥

कृ(तृ)ष्णे कृष्णेऽपि ते शक्तिः दु(दृ)ष्टा मर्त्येषु का कथा ।
त्रैलोक्यं(य) व्यापि यद्रूपं (तद्रूपं वामनीकृतम्) ॥ २९५ ॥

निष्की निष्कशतं शती दशशतं लक्षं सहस्राधिपः
लक्षेशः क्षितिपालतां क्षितिपतिश्श(श्च)क्रेश्वरत्वं गतः ।
श(च)क्रेशः पुनरिन्द्रतां शतमखश्शैवं पदं वाञ्छति
यक्षा(त्र्यक्षो) ब्रह्मपदं स वैष्णवपदं तृष्णावधिं को गतः ॥ २९६ ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

दन्ताः स(विश्लथ)दन्ताः केशाः(काश)प्रसूनसङ्काशाः ।
नयनं तमसामयनं तथाऽपि चित्तं धनाङ्गनायतम् ॥ २९७ ॥

आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला ।
यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति कुत्रचित् (बद्धवत्) ॥ २९८ ॥

आशापिशाचिकाविष्टः पुरतो यस्य कस्यचित् ।
वन्दते निन्दति स्तौति रोदिति प्रहसत्यपि ॥ २९९ ॥

आशातुरगमारुह्य नित्यं धावति याचकः ।
न चार्तिः न श्रमो ह्यस्य न गतौ ना(वा)पि मन्दता ॥ ३०० ॥
प्रातः क्षालितलोचनः करतलोदञ्चत्पवित्राङ्कुरः
तत्तत्स्थानकृतत्रि.......................* ॥ ३०१ ॥

अत्र मुद्रणसमये प्रमादतः पतितं श्लोकद्वयम् अधोमुद्रितं
४८पृष्ठे १३श्लोकानन्तरं संयोज्य पठनीयम्—
लुब्धानां याचकश्शत्रुः मूर्खाणां न्यायबोधकः ।
जारिणीनां पतिश्शत्रुः चोराणां च निशाकरः ॥

किं जन्मना भवति विप्रतया विना चे-
द्विद्वत्तया रहितया किमु विप्रजात्या ।
विद्वत्तयापि शमवर्जितया तया किं
किं वा शमेन हरिभक्तिविवर्जितेन ॥

---

*मद्रशासकीयहस्तलिखितकोशागारस्थ D. 12050 मातृकामादाय प्रकाशितमिदम् । तत्रैतावदेवोपलभ्यते ।

CC-0.Central Sanskrit University.Digitized by eGangotri

# सोमनाथशतकम्*

## †सोमनाथकृतम्

आर्यासूनुसमानं प्रणम्यमानं धरासुरैः प्रवरैः ।
[१]झापाम्बया तयालं मुद्गल[२]मालम्बदं कलये ॥ १ ॥

[३]वृत्ताभिख्या[४]हृतार्या[५] श्रुतविविधगणां[६] छन्दसां[७] वर्णनीयां
यातां सर्वादिमत्वं[८] सुरगण[९]कलितां भासमत्वं[१०] दधानाम् ।
[११]युक्तं स्थानं नयन्तीं लघुमपि सकलं बिभ्रतीं मालयायां (मात्रयालं)
वन्दे [१२]वार्धीभवर्णां भृतमुनियतिकां स्रग्धरां शम्भुमूर्तिम् ॥ २ ॥

---

* नागपुरस्थभोसलसंस्कृतमहाविद्यालये दृष्टा मया ग्रन्थस्यास्य मातृका । विद्यालयाध्यक्षैः श्रीशङ्करशास्त्रि-आर्वीकर-महोदयैः प्रतिलिपिरस्याः सदयं प्रेषिता ॥

† अस्य शतकस्य प्रणेता मौद्गलिः सोमनाथः सकलकलेत्युपनामभाक् जातिमाला-अन्योक्तिमालयोः कर्ता; रागविबोधो नाम प्रसिद्धः सङ्गीतशास्त्रग्रन्थश्चानेनैव १६०९ क्रिस्तवर्षे व्यरचि ।

१. झाता-इति मातृकायाम् । 'झम्पा' 'झापा' इति कवेरन्यासु कृतिषु । कवेर्मातुरियं नामेति भाति । २. मुद्गलः कवेः पिता ।

३. अत्र शम्भुमूर्तिस्रग्धरावृत्तयोः श्लेषः ।

४. मातृकायां '०ख्यां' इति व्यस्तं दृश्यते ।

५. आर्या तन्नामकः जातिरिति ख्यातः छन्दोविशेषः । पार्वती ।

६. गणाः वृत्तेऽक्षरगणाः, शिवानुचरा भूतगणाश्च ।

७. छन्दः पद्यं वेदश्च । ८. सर्वादिमत्वं सर्वादौ मुखे मगणः स्रग्धरायाम् ।

९. देवसमूहाः देवतावाचक-अक्षरगणाश्च ।

१०. भा ४; चतुस्समत्वमिति यावत् । समवृत्तं हि स्रग्धरा । अन्यत्र भायां कान्त्यामसमत्वमसमानत्वं दधानाम् ।

११. युक्तं संयुक्ताक्षरयुतं योगिनं च । लघुं लघ्वक्षरं, लघुभूतं जनं च । मात्रया गुरुलघुन्यायेनेति वृत्ते । शम्भुमूर्तिपक्षे मात्रया शक्त्येकदेशेन सकलम् अलं बिभ्रतीम् ।

१२. वार्धीभवर्णामिति । वार्धिः ४, इभः ८; प्रतिपादं स्रग्धरायां २१ वर्णाः, आहत्य ८४ भवन्ति । शिवमूर्तिपक्षे वार्धीभः समुद्रोत्थो गज ऐरावतः, तद्वर्णां धवलामिति यावत् । भृतमुनियतिकाम् मुनिः ७; प्रतिसप्तमाक्षरं स्रग्धरायां यतिः, भृता मुनयो यतयश्च ययेति अन्यत्र । स्रग्धरा तन्नाम वृत्तं, मालाधारिणी च ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

शान्तेर्मातुर्विवेकात्पितुरपि कृपणं मङ्क्षु कृत्वा पृथङ्माम्
आशायोषा स्वतन्त्रा व्रजति परगृहान् सर्वदा वीतलज्जा ।
संधत्ते मत्कृशत्वं मम यमनियमौ भ्रातरौ भर्त्सयन्ती
पुष्ट्वा दम्भं स्वबन्धुं तदपि कथमहं हन्त वन्ध्यां श्रयामि ॥ ३ ॥

आशा सैषाऽवलोक्य प्रचुरपरवसु प्रैषयन्मां तदर्थे
नानादेशानटित्वार्जयमथ तदहं लोभपुत्रानुयातः ।
दम्भं संगम्य मित्रं तदनु मदमहास्तेननिःस्वीकृतत्वात्
खिन्नोऽप्येनां कुनाथः कथमहह पुनः प्रेरयन्तीं भजेयम् ॥ ४ ॥

द्वारेद्वारे परेषां तमसि विलसिते रत्यवाप्त्यै भ्रमन्त्या
स्वस्त्रीसक्त्याऽन्यदीयां रतिमविदधतस्तान्मृषा विद्विषन्त्या ।
मुञ्चन्त्या लोकलज्जामहह कुलटयेवाशया दूषितो ना[1]
प्रायश्चित्तं गृहीतुं किमपि न यतते संगयोग्यो हि नो ना[1] ॥ ५ ॥

आविर्भूतप्रदोषां प्रविततनमसा निर्मितां भूरिजन्तु-
प्रागल्भ्यं दारयन्तीं द्युतिनिधनकरीं भानिधेरप्यतीव ।
आलम्ब्याशानिशां यो विचरति परितः किं न स स्यात्पिशाच-
श्चित्रं त्वेतच्चितायां न वसति लभते नाप्यदृश्यत्वमेषः ॥ ६ ॥

आशा निष्ठा प्रतिष्ठा किल मम महिलास्तासु सौख्यं कदाचित्
या प्रान्त्या सा प्रदद्यादिह किमपि तथा मध्यमा सा परत्र ।
आद्या सा नोभयत्राप्यहह तदपि किं सक्ततां यामि तस्यां
या प्रौढ्यादप्रगल्भे प्रतिदिवसमुभे ते कदर्थीकरोति ॥ ७ ॥

१. नरः ।

CC-0.Central Sanskrit University.Digitized by eGangotri

त्वं चेन्नीचत्वभीतः किमपि सुखमिह स्थातुकामोऽसि तद्वो
विद्वन्! मुञ्चापराशा[1]मसदृशमुचितां हन्त पत्युर्जडानाम्[2]।
एतामालम्ब्य दीनामनुदिनमिनवत्प्राग[3]वात्यो(तो)दयत्वेऽ-
प्यत्युच्चत्वेऽपि के के न हि बहुविपदं दीप्तिमन्तोऽपि यान्ति ॥ ८ ॥

विद्याभ्यासाख्यमाद्ये वयसि गुरुगृहे भूरि दुःखं मयात्तं
वित्तप्राप्त्याशया च प्रचुरधरणिभृत्सेवनाहं द्वितीये।
तार्तीयीके सकामव्रतयजनजपध्यानरूपं परं तु
प्रापि क्वापीप्सितं नो तदपि न चरमे मुच्यते हा दुराशा ॥ ९ ॥

मातस्तात प्रभो भो नयनविषयिते पादुके यन्मया ते
तत्पुण्यं पूर्वजानामिति रचितवचाः शौचमाचारमुज्झन्।
जात्युच्चो नीचभूपानुपचरति तथाप्यौदरीं नैति पूर्तिं
सत्येवं हन्त जन्तुर्भजति न तु कथं विश्वदं विश्वनाथम् ॥ १० ॥

भीतिव्रीडाविहीनो गहनगिरिदरीरन्यदीयान्गृहान्वा
सेवेतापास्य धर्मं नयमपि सपदि प्रायशो यद्वशो ना।
आशा सैषा मनोजा रतिपतिभगिनी कामशत्रो![4] ततस्तां
जन्तुक्लेशैकहेतुं तमिव[5] बहुकृते किन्न भस्मीकरोषि ॥ ११ ॥

श्रेयस्वी यत्र मानं व्रजति दुरितकृत् चापमानं मनुष्यै-
रज्ञेयं तत्र दूतैः प्रभुमनु मनुजो नीयते चानपेक्षः।
मृत्योर्गेहं वरं तन्न तु कुधनवतो यत्र सर्वापमानो
लोकैर्विज्ञायमानः स्वयमतिथितया यत्र चार्थी प्रयाति ॥ १२ ॥

---

१. अपराशा, एकत्र अपरा अश्लाघ्या आशा तन्नामा मनोभावः। अन्यत्र अपरा आशा पाश्चात्या दिक्। २. जडानां पतिः महाजडः, जलानां पतिः वरुणश्च, यस्य अपरा वारुणी आशा दिक् उचिता। ३. प्राक् पूर्वं प्राची च। ४. हे शिव। ५. काममिव।

CC-0.Central Sanskrit University.Digitized by eGangotri

द्वारेद्वारे परेषामविरतमटति द्वारपालैः करालैः
दृष्ट्वा यष्ट्याहतस्सन् रणति गणयति स्वापमानं तु नैव ।
क्षन्तुं शक्नोति नान्यं स्वसदृशमितरागारमप्याश्रयन्तं
श्राम्यत्यात्मोदरार्थं कथमहह शुना नो समो याचकस्सः ॥ १३ ॥

पङ्गोर्भावं वरं न त्वणुतरमनसां याचनायाङ्घ्रियानं
मूकत्वं वा वरं न त्वपलपितगुणं देहिदेहीति वाणी ।
जन्मान्धत्वं वरं न त्वधमधनवतामास्यभङ्गस्य वीक्षा
बाधिर्यं वा वरं न त्वतिपरुषगिरः संश्रुतिः प्रार्थितानाम् ॥ १४ ॥

स्वैर्लोकैर्योऽनुगम्यः प्रथममसदपि प्राप्नुयाद्यो गुणित्वं
पश्चाद्भिन्द्याद्गुरुत्वं ध्रुवमुदयति यः प्राणहीनो[1] वरं सः ।
न त्वर्थी योऽतिहेयो द्रुतमुचितजनैर्यश्च सिद्धं गुणित्वं
मुञ्चेद्योचे(दञ्चे?)ल्लघुत्वं महदहह न वा याति जातूदयं यः ॥ १५ ॥

धन्यं वन्यं हि मन्ये तृणमतनुगुणग्राहिकः कोऽपि लोको
मूर्धन्याधाय धाम स्वमभिनयति यत्सर्वदा[2]नन्ददायि ।
धिग्व्यर्थं त्वर्थिनं तं पृथुगुणमपि यं वीक्षतेऽपि क्षणं नो
दूरोद्विग्नो जनो न प्रणमति न नयत्यात्मगेहं च तत्किम् ॥ १६ ॥

चौर्यं कार्यं तदा यैर्निजमुदरदरीपूरणं नो भवेच्चेद्
उच्चैर्नीचत्वहेतुं न तु विदधतु ते याचनं यातनार्थम् ।
यस्माच्चोराः सुराजानुमतविधिवशाच्छूलपीठोपवेशाद्
उच्चत्वं तत्प्रयान्ति स्फुरति करतलोत्तानता[3] नैव तत्र ॥ १७ ॥

---

१. प्राणहीनः प्रेतः, शवः, यः श्मशानयात्रायां स्वीयैरनुगम्यते; गुणित्वं, गुणैः पाशैः बद्धत्वं याति; क्रमेण गुरुर्भवति वाहकानां; मरणानन्तरं च उदयति पुनर्जन्मनि । अर्थी याचकस्तु शवादपि निकृष्टः ।

२. सर्वदा धेनुः, गौणं नामेदम् । ३. याचनकर्मप्रयुक्तमुत्तानितकरप्रसारणम् ।

CC-0.Central Sanskrit University.Digitized by eGangotri

यं कंचित्सञ्चितस्वं कुवचनरचनं नैव याचस्व किंचित्
त्वामित्थं चित्त ! याचे तव रुचिरथ चेद्याचने याच्य ईशः ।
[1]भिक्षार्थित्वेन जानन्व्यसनमिव पृथु प्रार्थितव्यर्थतोत्थं
सामर्थ्याद्विश्वनाथः कथमपि वृथयत्यर्थनामर्थिनां न ॥ १८ ॥

याचन्तां केचिदाढ्यं पुरपतिमितरे देशनाथं तथान्ये
दिग्रक्षं केचनैके क्षितिपतिमपरे स्वर्पतिं स्वल्पचि(वि?)तम् ।
याचेऽहं तु त्रिलोकीपदसदधिकृतब्रह्मवाणीत्रिवेणी[2]-
प्रावीण्यावर्णनीयागणितगुणगणं श्रीमहादेवमेव ॥ १९ ॥

इति याचकनिन्दा ॥

लक्ष्मीरेषा विषादप्यतिशयविषमा सेवमानोऽनिशं यां
तं मोहं याति जन्तुः कथमपि विरतिर्मन्त्रतन्त्रैर्न यस्य ।
व्यामोहं तत्तु[3] साम्येन जनयति भवन्सो[4]ऽपि तै[5]रस्ति जय्यः
[6]सर्वज्ञोऽधत्त निःस्वोऽप्यत इव बत तत्तां[7]विहायाब्धितीरे[8] ॥ २० ॥

[9]सुज्ञाऽकस्माद्भवन्त्या दृशमथ रजसा पश्यतां दूषयन्त्या
यत्किंचित्कम्पयन्त्या निकटगत(म)[10]मृदुं शब्दमाश्रावयन्त्या ।
उन्मार्गेणोच्चलन्त्या सपदि कमलया वात्ययेवाभिभूताः
के के भ्रान्त्या पतेयुर्न जगति तृणवत्तूर्णमुड्डीय पूर्वम् ॥ २१ ॥

---

१. स्वयमिति शेषः । २. त्रिवेणी लक्षणया नदीत्रयप्रवाहः । तादृशवाग्धाव्याप्यवर्णनीयेत्यादि । ३. विषम् । ४. व्यामोहः । ५. मन्त्रतन्त्रैः ।

६. शिवः ७. तत् विषम्, ताम् लक्ष्मीम् । ८. समुद्रमथने समुत्थितयोः विषलक्ष्म्योर्मध्ये सर्वज्ञः शिवो लक्ष्मीं विहाय विषमधत्त ।

९. 'सुज्ञ' इति मातृकास्थं पदं दुरन्वयम्; 'शून्ये' इति स्यात्समीचीनः पाठोऽत्र, यतः शून्ये पूर्वं दरिद्रे पुरुषे अकस्माद्भनं भवति, वात्या च तथा शून्ये आकाशे अकाण्डे भवति । १०. निकटगं यत्किञ्चित्, अमृदुं शब्दमित्यन्वयः ।

CC-0.Central Sanskrit University.Digitized by eGangotri

लक्ष्मीश्चेल्लोकमाता किमवति न जनं प्रत्युतायासहेतुः
लोको मातेव यस्या इति भवतु पुनर्योगतः सा कथञ्चित् ।
यत्प्राप्यापत्यवत् तां[1] वहति निजतनौ स[2] व्ययात्पाति भीतः
पुष्णाति प्रत्यहं च त्यजति न मनसाप्यन्तकालेऽतिरागात् ॥ २२ ॥

नृभ्योऽग्नौ स्वस्य धातुद्रवणमथ जले मज्जनं छेदनं तः (तैः ?)
शस्त्रैः संदंशयोगोऽनलमिलनमयस्ताडनं जन्मनीति ।
दीनाराद्यर्थसार्थो व्यथनकृदखिलं संस्मरन् किं समर्थ-
स्तज्जातीयांस्तथैव व्यथयति धनिनो बन्धभूक्षेपखिन्नः ॥ २३ ॥

आः किं भुङ्क्षे त्वमाशीविषविषवदिमां मारयन्तीं जनानां
कार्ता(?)पस्वादुतैव (ऽस्सारतैव?) स्फुरति भवति वा यद्वशात्कण्ठरोधः ।
किंतु श्रेयोऽधिगन्तुं भज भवभिषजं तं विषादं[3] विषादं[4]
त्यक्त्वा त्वां तत्र सक्तं कृपणमपि कृपा यस्य पायादपायात् ॥ २४ ॥

इति लक्ष्मीनिन्दा

कारागारं बत स्त्री विसदृगि[5]ति पतिः सापराधं यदन्यं
बध्नात्यस्मिन्करार्थी न किमपि यतते रक्षणे चास्य बद्धः ।
अस्यां तूदेति बन्धः क्षरदवधि[6] करग्राहिणः पत्युरेव
प्रायोऽस्याः पालनादौ वहति च नितरां तादृशोऽप्येष चिन्ताम् ॥ २५ ॥

---

१. लक्ष्मीम् । २. लोकः ।

३. विषमत्तीति विषादः शिवः तम् । ४. दुःखम् ।

५. अन्यादृशम् । सामान्ये कारागारे पतिः राजादिकः अपराधिनं तथा अन्यमेव नरं, स्वयं ततः करार्थी वा बध्नाति; बन्धनानन्तरं कारागारस्य रक्षणार्थं न यतते । विशिष्टे स्त्रीनामके कारागारे तु करार्थी पाणिं गृह्णाति पतिः, स्वयमात्मानमेव बध्नाति; स च बन्धो निरवधिकः; स्त्रीरूपकारागृहस्य पालनार्थं च सदा चिन्तातुरो भवति । ६. निरवधि ।



CC-0.Central Sanskrit University.Digitized by eGangotri

सेयं हेया सुधीभिः कथमपि तरुणी वारुणीतोऽपि भीमा
यामालोक्यैव दूरात्सपदि बत नरो माद्यति भ्रान्तिमेति।
लज्जां मुञ्चत्यवश्यं रचयति वचनं किंचिदुच्चावचं च
प्रायो हाला तु कालाद्गतिमिति कुरुते सेविता सत्यतीव[1] ॥ २६ ॥

बाला ज्वाला विचित्रा सखिवरशिखिनः स्नेहतो नैव योज्या
दाहं या हन्त दृष्टा वितरति नितरां भूतिनाशं तनोति।
[2]पोषं दोषं जडत्वं नयति च दहति प्रायशोऽत्यन्तदग्धं
कम्पं संपन्नभावं गमयति तमसोऽतीव वृद्धिं करोति ॥ २७ ॥

नाशे हेतुर्वसूनामहह वसुमतः स्वप्रवेशस्य काले[3]
स्वाधीनत्वात्कलानां निधिमपि गमयत्येव दोषाकरत्वम्।
उच्चैर्माराङ्गभूता[4] प्रतिभयतमसो भूर्निसर्गेण योषा
याति प्राप्नोति [5]तस्योद्वहनकृत उषा रात्रिरित्थं स्फुटार्था ॥ २८ ॥

हन्त स्त्री मारशस्त्री सुखहृदपि कथं हृद्यभावेन कान्ता
किं तु प्रायः सुखात्तं कुरुत इति बुधैः कर्तृवत्सा निरुक्ता।
शत्रौ मित्रोक्तिवद्वा कथमपि गदिता वैपरीत्येन यद्वा
संज्ञात्वेनात्र वैद्यैरमृतमिव विषे कैश्चिदेवं प्रयुक्ता ॥ २९ ॥

---

१. हाला तु कालात् बहोः, अतीव च सेविता विकारानेतान् कुरुते, तरुणी तु दृष्टमात्रैव।

२. दोषं पोषं नयति, बहुलीकरोति। जडत्वं च नयति; सामान्या ज्वाला औष्ण्यात् जडत्वं व्यपोहति, इयं तु विपरीतम्। दग्धमेव दहति, विदग्धं चतुरं पुरुषं दहति इति उभयथा योज्यम्। ज्वालाग्रे कम्पः शीतादिप्रयुक्तो हीयते, अस्यास्तु पुरः स वर्धते।

३. स्वस्मिन् रात्रौ प्रवेशः, तत्समये। ४. मन्मथाङ्गभूता।

५. तस्य वसुमतः सूर्यस्य रात्रिभूताया योषाया अपगमानन्तरं तस्य उद्वहनकृते तया तिरस्कृतस्य उद्धारार्थं विवाहार्थं च उषा सा, तद्रूपा अन्या साध्वी नायिका च प्राप्नोति।

CC-0.Central Sanskrit University.Digitized by eGangotri

कान्ताकान्तारभूमिं परिहर सर रे चित्तमातङ्ग दूरं
शूरो मध्यो (मृत्युः?) मृगारिः सततमदयुतं मर्दयेत्तत्र तु त्वाम् ।
सत्येवं च त्वदन्तर्मिलितमपहरेन्मारभिल्लो विवेकं
मुक्त्वा सङ्गं महार्घ्यं सुजनसमुचितं रागगुञ्जैकयोग्यः ॥ ३० ॥

कूपातेनान्नपानाभिलषणविरतिं कान्तिशान्तिं तनुत्वं
तापान्तं श्रान्ततां ह्रीहतिमथ वचनोच्चावचत्वं ददत्या ।
मायाविन्या स्वभावाद्दलितशुचितया निर्दयत्वं दधत्या
श्लिष्टे योषापिशाच्या निजरसवशतः पुंसि सौख्यं कथं स्यात् ॥ ३१ ॥

नार्यङ्गानां [1]यदङ्गोपमितिरधिगता ते कुरङ्गादयो यां
पुष्यत्यन्यं फलैर्या हरति परमलं या च नद्या स्वतोत्था (तो या?)।
तामुन्मुच्याटवीं किं श्रयसि मृगदृशं पोषणीयां प्रयत्नैः
क्लिन्नामन्तर्बहिश्च प्रबलमलशतैर्वञ्चितः काव्यगोष्ठ्या ॥ ३२ ॥

श्वश्रूः साधित्यकैव श्वशुर उहरगः (उटजकः?) श्यालका भूरुहोऽर्हाः
श्याल्यो वल्ल्यो विचित्राः सखि कुलममलं श्वापदानां कदम्बम् ।
भार्या [2]दर्यार्ययोग्या सुततिरपि सत्कर्मणां पङ्क्तिरग्रे
मुञ्चन्ती प्रीतये मे फलनिकरमिति प्रार्थितं कर्हि सिध्येत् ॥ ३३ ॥

भोगा रोगास्त्वपूर्वा गुणविषमतया देहिनं व्याप्नुवन्तो
निघ्नन्तो विप्रयोगे दिनकरभजनादौषधाद्यानिवार्याः ।
प्राप्य प्रायो युवानं विहितविकृतयः प्राणिभिः काङ्क्षणीयाः
सत्येवं हन्त जानन्नपि भजति कथं स्वापदेरीति (ऽरीनि)वामून् ॥ ३४ ॥

---

१. यदङ्गोपमितिः कुरङ्गाद्यङ्गोपमितिः । ते यामटवीमधिगताः । परमलं नद्या या अटवी हरति, या च स्वतः सर्वमिदं करोति ।

२. दरी आर्ययोग्या इति च्छेदः ।

CC-0.Central Sanskrit University.Digitized by eGangotri

दुष्टेऽस्मिन्भोगिभावे[1] श्रवणरहितता विष्णुसेविद्विषत्ता
द्वैजिह्यं जिह्मगत्वं परहतिपटुताऽधःस्थलोके निवासः ।
भोगच्छेदे विपत्तिः सपदि च तदिदं सर्वमर्हं परं तत्
चित्रं वाताशनत्वं न यदिह न हि वा भोगसंकोचिता यत् ॥ ३५ ॥

श्रीरामापुत्रधामाद्यधिगत(ति?)विषयां मुञ्च चिन्तां त्यजैतां
प्राचीनं कर्म शर्म प्रवितरति विना प्रार्थनेन व्यथावत्[2] ।
चिन्तामात्रेण वित्ताद्यधिगतिरिति चेत्किं न सर्वे समृद्धाः
किंतु स्यादङ्गसादो द्युतिनिधनमपि प्रत्युतास्याप्रसादात् ॥ ३६ ॥

सारं सारङ्गनेत्रा जगति न हि भवेदन्तवैरस्यदात्री
[3]मा वामावास्यकाया रजनिरिव तमोदूषिता नैव सारम् ।
नो [4]पीनोऽपीष्टपुत्रादिकविषयचयः सारमस्थैर्यपात्रं
[5]सन्नासन्नाय गोप्यं स्वहितमुपदिशन्नेक एवास्ति सारम् ॥ ३७ ॥

नेहे गेहेषु सौख्यं धनतनयहयप्रेष्यदासीपशुभ्यो
भोगान् रोगानमुख्यान्न तु रतचतुरा नो नवाः कान्तकान्ताः ।
प्राज्यं राज्यं न भूमेररिपु न बत वा शेवधीन् दीनबन्धो
शम्भो दम्भोलिपाणेर्न पदमपि चलं किन्तु देहि स्वदास्यम् ॥३८ ॥

---

१. भोगिभावः भोगशालिता, सर्पभावः । श्रवणम् ईश्वरगुणसत्कथादिश्रवणं श्रवणेन्द्रियं च । विष्णुसेवी गरुडः, अन्यत्र भागवतः । अधःस्थलोकः पातालः, अन्यत्र निकृष्टगोष्ठी ।

२. "अप्रार्थितानि दुःखानि यथायान्तीह देहिनाम् । सुखान्यपि तथा" इत्युक्तिरनुसार्यात्र ।

३. मा वा लक्ष्मीर्वा । अमावास्यकाया अमावास्यायाः रजनिरिव ।

४. पीनोऽपि स्थूलोऽपि इष्टपुत्रादिकविषयचयः । ५. सन्ना सन् ना साधुः गुरुरूपः पुमान् । आसन्नाय शिष्यभावेनोपसन्नाय गोप्यं मन्त्रादिकम् । स एक एव सारभूतः ।

CC-0.Central Sanskrit University.Digitized by eGangotri

क्षुद्रैरन्तर्बहिर्यन्निचितमनुचितैर्जन्तुभिः कालगत्या
विस्रं प्रस्रावि जीर्णं क्षणमपि रुचिरं मार्जनाद्यैर्विना न ।
देहं गेहं च तुल्यं परमिह निधने गेहमन्योपयुक्तं
स्यान्नो देहं; सतीत्थं न तदुपकृतये जीवतो यस्य तं धिक्[1] ॥ ३९ ॥

मूकत्वान्नग्नभावान्मलुलुलिततनोरुक्तयोगाच्च दुःखाद्
बाल्यं पैशाच्यमुच्चैः कथमपि शनकैर्यावदेतद्व्यपेतम् ।
विभ्रद्दोषप्रकोपं करचरणमपीतस्ततो भ्रान्तनेत्र-
स्वान्तं निक्षेपयन् हा सपदि तरुणिमोरुज्वरोऽलम्भि तावत् ॥ ४० ॥

तारुण्यारण्ययातोऽप्यहह किमु न रे सावधानोऽसि जन्मिन्[2]
हन्युस्त्वां व्यग्रमुग्राः प्रचलितमभितो व्यापकाः पञ्च चैकम् ।
कोपो द्वीपी प्रपञ्चोऽहिरपि मद इभो मत्सरः सूकरेशो
दम्भो भल्लूक एषोऽसमशरशरणो मन्मथश्चोरनाथः ॥ ४१ ॥

यातायातं विधत्ते सुखमसुशफरी कायकासारदेशे
यावत्संफुल्लचक्षुर्मुखकरचरणाम्भोजराजीविराजि ।
स्फूर्जद्वानीरपूरे बहिरमलतरे तावदत्तुं स्थितस्तां
कुर्वन् मन्दं पदं स्वं बत पलितबको वञ्चकः कुञ्चिताङ्गः ॥ ४२ ॥

संशीर्णा हन्त दन्ता नवयुवतिरदाच्छादन[3]च्छेददक्षा-
श्चक्षुर्नोद्वीक्षणेऽपि क्षण(म)महह रहः स्त्रीकटाक्षानुभावि ।
कर्णौ बाधिर्यपूर्णौ बत निपुणवधूचाटु संश्रुत्य फुल्लौ
निर्लज्जो जन्तुरेवं सति वहति रतिं योषिति त्यक्तरत्याम् ॥ ४३ ॥

---

१. यस्य जीवतः पुंसः तत् देहं न उपकृतये, परोपकृतये न भवति, तं पुमांसं धिक् । २. जन्तो । ३. रदाच्छादनम् अधरः ।

CC-0.Central Sanskrit University.Digitized by eGangotri

अक्ष्णोरश्रुप्लुतत्वं स्वरविकृतिरतिस्तब्धभावश्च गत्या
वैवर्ण्यं गात्रकम्पः प्रलय इति दशा यद्वशेनाभिगम्याः ।
प्राप्तावज्ञां जरास्त्रीं समधिकवलितां मौलिना तां भजन्तं
कान्ता स्वं वीक्ष्य नाथं प्रथममनुरताऽप्यन्तिकं नोपयाति ॥ ४४ ॥

पादौ संस्तम्भयन्ती मुखमपि नमयत्यङ्गमाकुञ्चयन्ती
हस्तावुत्कम्पयन्ती प्रणयिजनवचो न श्रुती श्रावयन्ती ।
रत्यामुद्वेजयन्ती वलिततनुमतो नूतनोढा जरा वा
तुल्या पूर्वा तु पुंसस्त्रसति बत परा भीतिहेतुर्नरस्य ॥ ४५ ॥

[1]बालं कृष्णं प्रसूनार्चितमनवरतं यः पुरासाद्य मूर्ध्ना
युक्तः पङ्क्त्या द्विजानां शुचितरवपुषाभीप्सितान्नान्यभुङ्क्त ।
सोऽयं तन्नो दशाप्याकलयति बिभृते चापि नैकं द्विजं हा
वृद्धत्वे किंतु जन्तुः स्वजठरपिठरं कष्टरूपं बिभर्ति ॥ ४६ ॥

वालैरात्तं सितत्वं निजमिति गलिता लज्जयेव द्विजालिः
तस्या दृष्ट्वैव दैन्यं नयनयुगमगादन्धतां खिन्नमन्तः ।
वार्तां श्रुत्वेति दुःखाकुलमिव बधिरं कर्णयुग्मं च जातं
ज्ञात्वापि स्वाप्तपङ्क्तेर्विपदमिति कथं जीवितं स्थातुमीष्टे ॥ ४७ ॥

आसीत् पूर्वं सुहृत्ताद्यलस उपचितोऽप्यज्ञ सत्सु द्विजेषु
क्षीणत्वे तु द्विजेषु व्यसनिषु पतितेष्वद्य प(य)द्यादरस्ते ।
किं स्यादस्यां दशायां तव हितमुचितं किंचिदाख्यामि सख्यात्
मन्त्रं सप्ताक्षरं त्वं जप सुगमममुं-'पाहि भो मामुमाप' ॥ ४८ ॥

---

१. बालकृष्णं नाम देवं पुष्पैः पूजयित्वा प्रणम्य च। अन्यत्र कृष्णं तद्वर्णं वालं केशभारं प्रसूनालङ्कृतं शिरसि लब्ध्वा। द्विजाः दन्ताः, भोजनोपविष्टा ब्राह्मणाश्च। शुचि शुद्धमुज्ज्वलं च। एवं यौवनं वर्णितं भवति।

CC-0.Central Sanskrit University.Digitized by eGangotri

केशाः शेषाहिवर्णा वदनमपि वलीधारि दन्ताः समन्तात्
जाताः पातादद्दश्या वचनमवशगं हन्त दोषाः सपोषाः ।
श्रोत्रं गोत्रं[1] शृणोति स्वमपि न नयनं क्लिन्नमङ्गं सभङ्गं
स्वान्तं भ्रान्तं मुहुस्ते स्मरसि न किमु रे मारहन्तुः परं तु ॥ ४९ ॥

आयुर्दायं प्रभावाद्विपुलमथ मितं जन्तुजाताय दद्युः
द्युस्थानस्था ग्रहा ये विविधगतियुता जीव[2]मुख्यास्तथापि ।
वृद्धत्वं प्राप्य तेऽस्तं कतिपयदिवसैरेव यान्तीति बुद्‍ध्वा
वृद्धा भूस्था(त्वा)पि जीवाः स्वहितमहह नो कुर्वते
ते(ऽन्तेऽ)न्तिकस्थे[3] ॥ ५० ॥

[4]दोषोपद्रुत्यनूनं भवगदमशितुं यस्य केऽप्युद्यता नो
वृद्धस्यापथ्यवृत्तेः किमपि न धनिनस्तेन काशीष्ववाप्य ।
[5]विश्वेशादेर्गणस्याङ्घ्रिदशकयुगलं स्वौषधं सिद्धबुद्धं
सन्मात्रं त्रासहीनं प्रतिदिनमरुणार्काङ्घ्रियोगेन सेव्यम् ॥ ५१ ॥

सत्सङ्गः सर्वकालं सललितवचनं सादरत्वं स्वधर्मे
संकष्टे स्वन्तदार्ढ्यं सुतयुवतिसुखे स्तोकसंसक्तभावः ।
संतोषः स्वल्पलाभात्सकलजनहिताशंसिता स्वामिसेवा
सामर्थ्ये सौम्यवृत्तिः सदयहृदयता संसृतेः[6]सादहेतुः ॥ ५२ ॥

---

१. गोत्रं नाम। २. जीवो बृहस्पतिः। उपरि जीवाः प्राणिनः। ३. अन्ते मरणे अन्तिकस्थेऽपि ।

४. दोषोपद्रुति-अनूनमिति च्छेदः। यस्य धनिनोऽपि वृद्धस्य गदनाशनाय केऽपि नो उद्यता इत्यन्वयः ।

५. 'विश्वेशं माधवं दुण्ढिं दण्डपाणिं च भैरवम्। वन्दे काशीं गुहां गङ्गां भवानीं मणिकर्णिकाम् ॥' इति काशीस्थदैवतदशकं विश्वेशादेर्गणस्येत्यनेनोच्यते। दशानां पदयुगलमिति। क्वचित्काशीस्थदैवतदशकस्य निर्देशो मनागन्यथापि दृश्यते ।

६. सादः अवसादः ।

CC-0.Central Sanskrit University.Digitized by eGangotri

भीतामेतां कृतान्ता[1]दवसि (न) जनतामानतां सर्ववेत्तां (त्ता)
त्वं चेत्तन्मुञ्च मुञ्च त्रिजगति गदितं नामजातं स्वकीयम् ।
भूतेशो विश्वनाथस्त्रिपुरहरशरः श्रीमहादेव ईशः
स्थाणुर्मृत्योर्विजेता गरभुगथ शिवः शङ्करः शम्भुरेतत् ॥ ५३ ॥

[2]सोमः कामोऽभिलाषो मम च समतमाश्चित्त(ज)त्वाद्रतेर्वा
योग्यत्वात्त्वद्गतत्वाद्बहुतरसुमनःसंमतत्वात्सतोत्थं (समोऽहम्?) ।
सख्यं द्वेषोऽप्युपेक्षा यदिह भवतु तत्ते महेश प्रभुत्वात्
दृग्वैषम्यादपि त्रीक्षण[3]मपि तु न किं शङ्करः शं करोषि ॥ ५४ ॥

[4]म्लानेनेत(न)स्य गेहे स्थितमधिकवसोः पर्वकाले मयोच्चै-
रभ्यस्तं भ्राम्यता च प्रसरणमहह प्रत्यनन्तं करस्य ।
दत्तांशेनाऽमराणां भजनमधिकृतं नामतः कर्मतश्च
प्राप्तं सोमत्वमित्थं तदपि मदुदयो देव राजाशया न ॥ ५५ ॥

इति प्रथमपञ्चाशिका ॥

---

१. अवसि न, न रक्षसि । आनतां त्वामुद्दिश्य प्रणताम् । त्वं सर्ववेत्ता न रक्षसि चेत् उपरि निर्दिश्यमानं दीनावनार्थकं सर्वं ते नाम मुञ्च ।

२. सोमश्चन्द्रः, ग्रन्थकृच्च । एतत्त्रयं शिवग्रन्थकृतोस्समतमम् । चित्तजत्वात्, सोमस्य, 'चन्द्रमा मनसो जातः' इति ऋचः । रतेर्वा योग्यत्वादित्ययं काम इत्यनेन अन्वेति । त्वद्गतत्वादिति अभिलाष इत्यमुं परामृशति । शिवविषयकाभिलाषस्य भक्तानां सत्त्वात् । ग्रन्थकृद्विषये सोम इति नाम; कामाभिलाषौ च स्वरसतः स्तः । अन्यच्च ग्रन्थकृत् शिवेन स्वसमत्वमाह बहुतर इति । सुमनसो देवाः, पण्डिताश्च ।

३. ईक्षणत्रयवत्त्वात् दृष्टिप्रकारत्रयं सख्यं, द्वेषः, उपेक्षा वा भगवत उपपद्यते ।

४. अत्र ग्रन्थकृतः नामतः सोमत्वात्, स्वस्य च चन्द्रस्य च श्लेषद्वारा साम्यं व्यतिरेकश्च वर्ण्येते । म्लानेन, कलाक्षीणेन दुर्गतेन । इनस्य सूर्यस्य प्रभोश्च । अधिकवसोः प्रभूतकिरणस्य तथाविधवित्तस्य च । भ्रान्तिरुभयस्य समाना । करस्य प्रसरणं किरणविस्तारः, याचनया हस्तप्रसरणं च । अनन्तं प्रति, आकाशे; अन्यत्र अनन्तान् जनान्प्रति । चन्द्रः कलाभिः अमराणां पोषणं करोति, कविः भक्तस्सन् तत्तत्समर्प्य देवानां भजनं करोति । एतावतापि हे देव ! शम्भो मदुदयो राजाशया न । राजा चन्द्रः प्रभुश्च ।

CC-0.Central Sanskrit University.Digitized by eGangotri

गौरीयुक्ताङ्कभागां वलयितभुजगां भूरिभस्माङ्गरागां
मौलिव्यालीनगङ्गां श्रिततुहिननगां क्लृप्तकन्दर्पभङ्गाम् ।
मुण्डोरुस्रग्धरां तां मुनियतिनिरतां वेदवृन्दानुगीतां
नौमि ब्रह्माद्या(द्वयां?) तां गगननिवसितां[1] शंभुमूर्तिं प्रशान्ताम् ॥ ५६ ॥

द्वारे द्वारे परेषां प्रगटगुणगलो[2] भ्रामितो नामितास्यो
वेषाद्यैर्हास्यदोऽहं प्लवग इव युवा दण्डवत्या युवत्या ।
तत्त्वास्तामस्तशक्ति सजरसमरसं मां तथा नर्तयन्ती
तृष्णे कृष्णानने किं न कलयसि कृपां किंचिदद्याप्यवद्ये ॥ ५७ ॥

नानादानानि मानाग्रसर[3]मकरवं हेतुहीनानि[4] नाहं
दीनानां चाशनायामशमयमुचितेनान्नपानादिना न ।
आसन्नानां जनानामभिमतमपि नापूरयं निर्धनाना-
मन्नान्येवाधमानामघस[5]मणुमना[6] हा धनाढ्योऽप्यनर्थः[7] ॥ ५८ ॥

श्यामा दृश्यापि रामा यदपि तदपि सा हन्त लाभातिवामा[8]
यामालोक्याभिरामाननुसरति नरो नैव धामादिकामान् ।
क्षामात्मा हीनधामा क्षणमपि विकलो न त्रियामासु शेते
मा मा याहीति गामालपति च वितथं तेन तामाश्रयेन्न ॥ ५९ ॥

---

१. दिगम्बराम् ।

२. याचकत्वात् स्तुतियाच्ञादिव्यञ्जककण्ठगुणाः, प्लवगपक्षे कण्ठबद्धरज्जुः । प्रगटः प्रकटः ।

३. मानपूर्वाणि दानानीत्यर्थः । ४. निर्व्याजानि । ५. अभक्ष्यम् । ६. फल्गुहृदयः । ७. धनाढ्योऽपि दरिद्र इव ।

८. लाभादनन्तरमत्यन्तं वामतां गता ।



CC-0.Central Sanskrit University.Digitized by eGangotri

[1]आराकाराणुवेणी शिरसि, कृशतरा मध्यमुष्टौ, परत्र
स्फाराभ्यन्तःकठोरा बहिरपि मलिना वस्त्रकोशे विलीना ।
वाग्धारायां सिता या दृशि परिपतिता मोहकारी नराणां
[2]स्मारी नारी कृपाणी यदि लगति गले[3] जीवहारी परं सा ॥ ६० ॥

[4]बालाः शीलप्रलोला विहितमदमला हन्त हालाविलासाः
कालाद्घातानुकूलाः[5] कथमपि कमलाः[6] स्वादुहालाहलाभाः ।
स्वालापा नालमाता(?)[7] प्रण(णि)हतकुशलाः व्याधजालालिलीला[8]
[9]व्यालान्यद्वच्छृगाला(:) किमु भजथ बलात्तत्किलामूः कुशीलाः ॥ ६१ ॥

सौधाः [10]संपत्त्यगाधाः किल मम बहुधाऽह्लादभाजोऽवरोधाः
योधाः कृप्तारिरोधाः पृथुरपि वसुधा वाहिनी दुर्निबोधा ।
भो धात्रीशेत्यसाधारणमदमबुधाधीश चित्तेऽत्र मा धाः
वेधाः स्वप्नाभमाधात्त्वयि तदिति मुधा किं विधत्सेऽपराधान् ॥ ६२ ॥

कामान्क्षेमाशयेमान्परिणतिविषमान् हा समाधाय चित्ते
क्षामाचारा भ्रमामोऽनुदिवसमधमा नीचधामाजिरेषु ।
किंतूमाधार चर्माम्बर हर पुरजिन्मारमारेति[11] शंभो-
र्नामालीमालपन्तः क्षणमपि सशमास्तं नमामो न नान्यम्[12] ॥ ६३ ॥

---

१. आरम् अयोनिर्मितम् शितम् आयुधं तद्रूपा । शिरसि अन्तिमभागे अणुवेणीरूपा वेणीव अणुप्रमाणतां बिभ्रती । स्त्रीपक्षे च तादृशाकारं वेणीभूतं केशं बिभ्रती । २. स्मरसम्बन्धिनी कृपाणी । ३. यद्यालिङ्गति गले; कृपाणीपक्षेऽपि स्पष्टोऽर्थः ।

४. युवत्यः । ५. कालेन मारणशीलाः । ६. सशरीरमलाः ७. अशुद्धात्र पङ्क्तिः; स्वालापानालपन्त्य इति स्यात् । ८. व्याधविस्तारितजालसमूहसदृशाः ९. शृगाला यद्वत् स्वनाशाय व्यालान् सर्पान्, व्याघ्रान्, दुष्टगजान् वा भजेयुः, तथा किमु एताः कुशीला भजथ इत्यन्वयः ।

१०. अगाधसम्पत्तिमन्तः ।

११. मारमारक इति । १२. नान्यम् यथा तथा, अनन्यत्वेन न नमामः ।

CC-0.Central Sanskrit University.Digitized by eGangotri

सारासाराविचाराद् वयमहितपरा हन्त दारान्भजामः
[1]कारागाराणि मारावनिपवशतरास्तज्जजीवानुरागाः[2]।
आरादाराधनीयं न तु मदनरिपुं जन्ममाराम्बुधारा-
पारावारावतारानुगुण[3]मनुचराराम[4]माराधयामः ॥ ६४ ॥

अङ्गासङ्गादनङ्गाल्पविषयसुखदात्कामिनीनां प्रसङ्गात्
[5]पञ्चाभ्यङ्गांस्तरङ्गानिव पलसमयेनाकलय्याशुस(भ?)ङ्गान् ।
[6]गङ्गाभङ्गात्तरङ्गामभयवरकुठारान्तिकोद्यत्कुरङ्गा-
मङ्गाव्यङ्गामनङ्गारितनुमनुदिनं चिन्तयाञ्चक्रुजङ्गाम् ॥ ६५ ॥

[7]पाखण्डाचारिदण्डार्हण उपसरता दानशौण्डान्वितण्डा-
वादैरिद्धेन रण्डार्जव(न?)पटुवचसा[8] हा मयाऽनाय्यनेहा[9] ।
ध्याता न त्विन्दुखण्डाकलितसदलिका मूर्तिरानद्धसुण्डा
गण्डालोलाहितुण्डा निजभजनकृते दत्तपण्डा[10] प्रचण्डा ॥ ६६ ॥

सारङ्गाक्षीं सहारं रहसि न कलये चारुतारङ्गवर्णां
नोदारं सानुकारं ललितमपि भजे गानमिष्टाङ्गहारम्[11] ।

---

१. दारा एव कारागाराणि । २. तज्जीवा दारजाः पुत्राः । ३. जननमरणरूपा अम्बुप्रवाहाः पारावारेऽवतीर्णा इव यस्मिन् विलयमाप्नुवन्ति । ४. अनुचराणामारामभूतम् ।

५. पञ्चाभ्यङ्गान् पञ्चेन्द्रियविषयलेपान् तरङ्गानिव अल्पकालेन आशुभङ्गान् क्षिप्रनाशिन आकलय्य । ६. द्वितीयार्धेन अनङ्गारितनोर्वर्णनम् । गङ्गाभङ्गैस्तत्तरङ्गैरात्तः रङ्गः वर्णः शोभा यया ताम् । अथवा गङ्गाभङ्गोत्तरङ्गाम् इति पाठः स्यात् ।

७. पाखण्डाचारिदण्डार्हणे तादृशे दण्डये जने दानशौण्डान् उपसरता इत्यन्वयः । ८. रण्डायाः तादृश्याः स्त्रियः आर्जने पटु वचो यस्य तेन । ९. अनेहा दिवसः मया अनायि इत्यन्वयः । १०. निजभजनकृते जनाय दत्तपुण्या ।

११. अङ्गहारः गात्रविक्षेपरूपं नृत्तमुपलक्षयति ।

CC-0.Central Sanskrit University.Digitized by eGangotri

संसारं निर्विचारं प्रशमयितुमहं दुःखभारं ह्यपारं
वारंवारं तु सारं जटिलमतिसितं दग्धमारं स्मरामि ॥ ६७ ॥

नाशापाशातु पाशावदपि....(?)कृशा यद्भृशाकृष्यमाणा
यातायातानि जाताभ्यधिकविकलताः कुर्वते तावदेते ।
मायानायादपायादवितजनचया तद्व्ययार्थं मयाऽसौ
[1]तारा तारायताराधिपशकलधरा मूर्तिराराधनीया ॥ ६८ ॥

योषासङ्गाः प्रदोषा इव कृतमनसः[2] प्रीतिपोषाय नामी
कोषाश्चोरोत्थमोषाच्चिरतरमवतो मे वतृष्णापहन्त(?)[3] ।
[4]कामस्येर्षाहरोषामनुसरणकृतः[5] क्लृप्तमायाधिशोषा-
मीडे तोषाय दोषाकरलसदलिकां व्यक्तिमेकामदोषाम् ॥ ६९ ॥

पुत्रा मे सच्चरित्राधिकविहितमुदः प्रेमपात्राणि मित्रा-
ण्यापन्नत्रासगोत्रा[6] यदपि युवतयः पद्मनेत्रार्थचित्राः[7] ।
कोऽपि त्राता बतात्रास्ति न यमभयतो नन्दिपत्रा[8] पवित्रा
मूर्तिः पित्रा च मात्रा सह्यगिह तु जयत्यन्तकत्रासिगोत्रा[9] ॥ ७० ॥

---

१. उन्नता । तारायाः तदाद्यानां नक्षत्राणां चाधिपः चन्द्रः, तच्छकलधरा ईश्वरमूर्तिः । २. कृतधियः पुरुषस्य । ३. 'मे न तृष्णापहत्यै' इति शुद्धः पाठः स्यात् । ४. कामेर्ष्याहारिरोषाम् । ५. भजनविधायिनः ।

६. आपन्नत्रासं पापाद् भयशील गोत्रं वंशः, तद्भवा युवतयः, शिष्टा इति यावत् । ७. पद्मनेत्राश्च अर्थचित्राश्चेति योजनीयम् । ८. नन्दिवाहना । ९. गोत्र-शब्दोऽत्र नामवाची । यन्नामकीर्तनेन अन्तकस्त्रस्तोऽपगच्छति ।

संपत्तिः कम्पयन्ती तरलमतिचला शम्पया[1] तुल्यरूपा
संपर्के लम्पटोऽस्या इति सति[2] कुरुषे त्वं परं स्वाहिताय ।
अङ्कप्राप्तेष्ववङ्क[3]स्थितिमधिकदयं दत्तसङ्कल्पितार्थं
[4]पङ्कध्वान्तांशुमन्तं किमिति न भजसे रङ्क[5] रे शङ्करं तम् ॥ ७१ ॥

कारावन्ना[6] कुदारानयमशुचितरानर्पितोद्वेगभारा-
नर्थाक्षेपानसारानवनपरनरान्नेत्य(नेत्य?)दैवात्सुसारान्[7] ।
आहारान्वा विहारान्परिहरतु वरान् स्वान्ततो यावदारात्
मुक्त्यै तु स्मारहारान्[8] जपतु सुखकरान् नाममन्त्रानुदारान् ॥ ७२ ॥

[9]अर्वाणः सन्त्यपूर्वा मम बत करिणः शैलतर्वाद्यखर्वा
गीर्वाणांश्चानुपर्वासुखयमहमहो श्रीपतिर्वासनाभिः[10] ।
[11]गार्वान्मुञ्चेति सर्वानखिलमपि चलं स्वर्णमर्वाद्यतोऽर्वाक्
शर्वाणीकान्तमुर्वाश्रयमभयधिया मित्र ! कुर्वात्तभावः ॥ ७३ ॥

किं गर्वी जन्तुरुर्वीस्थपतिरहमिति स्वानुपूर्वीप्रवृत्त्या
स्वर्वीथ्यन्तं तु सर्वं परिणतिविरसं[12] चेतदुर्वीशतेष्टा ।
अङ्गीकुर्वीत दर्वीकरकरवलयं तद्यखर्वीकृतार्थि
स्वान्तान्तर्वीतरागैः सततमधिगतं धाम चार्वीशनाम ॥ ७४ ॥

---

१. विद्युता । २. एवं सति इत्यर्थः । ३. अवङ्का अवक्रा स्थितिः यस्य तम् ।
४. पङ्कः लक्षणया अविद्या । ५. रङ्क कृपणेति मनुष्यं प्रति संबुद्धिः ।
६. कारावत् कारागृहवत् । ना मनुष्यः । कुदारान् कुत्सिताः भार्याः, तान् ।
७. भोजनादिदानेन अवनपरनरान् प्रभून् दैवात् एत्य । सुसारानाहारानित्यु-पर्यन्वयः ।
८. स्मरहरस्येमान् स्मारहारान् नामरूपान् मन्त्रान् ।
९. अश्वाः । शैल-तरु-आदि इति च्छेदः । देवांश्च अनुपर्व असुखयमतर्पयम् । श्रीपतिः तादृशसंपत्तिमानहम् । १०. अविद्यावासनाभिः गार्वानित्युपरि अन्वयः ।
११. गर्वमयान् सर्वान् । अर्वादि अश्वादिकम् ।
१२. आस्वर्गं सर्वस्य 'क्षीणे पुण्ये' इत्युक्तरीत्या पुनरावृत्तिग्रस्तत्वात् ।

CC-0.Central Sanskrit University.Digitized by eGangotri

[1]आशाशाली न्यपाली(?) विचरसि परितः किं नृपालीरपाली-[2]
[3]र्भालीया वर्णपाली फलति यदुचितं मन्द[4] नालीकतात्र[5] ।
आलीनो गोमचाली(?)[6] विमलहृदयखे[7] चित्प्रभालीढमूर्तिः
कालीशाली[8] कपाली भवतिमिरहृतावंशुमाली विधेयः ॥ ७५ ॥

संसारेऽस्मिन्नसारे घनविपिनसमे पन्नगीभूतदारे
गर्ताकारोर्वगारे[9] किमु रजथ[10] वृकप्रायमारे जडा रे ।
दीनान्पान्तं सुशान्तं शिशिरहिमरुचाऽतीव भान्तं न भान्तं[11]
गौरीकान्तं तु कान्तं प्रभजत भजतां वारितान्तं[12] नितान्तम् ॥ ७६ ॥

अन्योन्यारब्धवादैरभिलषितधना मान्यमप्यूनयन्तो[13]
धन्यंमन्या यदान्यान्वशयितुमनसोऽनेहसं हा नयामः ।
[14]वन्यान्नेनाशनायामवनिधरझरेणाप्युदन्यां हरन्तो
धन्यास्तेऽनन्यभावा मह उचितहिमान्यद्रिकन्यं मनन्ति[15] ॥ ७७ ॥

---

१. आशाशाली सन् । 'न्यपाली' इत्यत्र पङ्क्तिर्न शुद्धा । अपालीशब्दोऽत्र पालकरहितः अनाथ इत्यर्थे स्यात् । २. अपालीः नृपालीः दुष्टसखा नृपगोष्ठीः । ३. भालीया वर्णपाली ललाटे विधिलिखिता रेखा । ४. हे मन्देति संबुद्धिः । ५. न अलीकता अत्रेति छेदः । ६. गोप्रचाली वृषभेन चलनशीलः, अथवा गोत्रचाली पर्वते चलनशील इति वा स्यात् । ७ विमलहृदयाकाशे । ८. कालीदेवीसनाथ इत्यर्थः ।

९. उरु-अगारं गर्तरूपम् यस्मिन् । १०. भ्वादिः रञ्ज्-धातुरत्र ग्राह्यः । ११. भाया: प्रकाशस्य अन्तो यस्मिन्नास्ति, तम्; ज्योतिर्मयमित्यर्थः । १२. भजतां वारितान्तः मृत्युनिवारकः, तम् ।

१३. मान्यं मानार्हमपि ऊनयन्तः हीनं कुर्वन्तः । १४. वन्यमन्नमश्नन्तो गिरिनदीजलं पिबन्तश्च । १५. उचितहिमान्यद्रिकन्यं पार्वतीसहितं महः तेजः येऽनन्यभावाः मनन्ति आमनन्ति ।

CC-0.Central Sanskrit University.Digitized by eGangotri

पीयूषाभं सुशान्तं तुहिनकरकरासङ्गतः शीतलाङ्गं
रिङ्गद्गङ्गातरङ्गं हिमगिरितनयालिङ्गितं शङ्करं तम् ।
सन्तः सञ्चिन्तयन्ते भजनरसमयं शैत्यमन्तर्वहन्तो
मोदस्वेदार्द्रदेहाः सपदि भवदवव्याप(पि)तापोपशान्त्यै ॥ ७८ ॥

हासः कामानुसारी[1] गतरसमशनं हास्यसन्दायि वासो
[2]रासोऽप्यात्मावसायी वसतिरशरणा यस्य दासः स्वपाणिः ।
आयासोऽन्यानुपोषी[3] वच उचितरसं दुःखनाशोऽनुशासो[4]
विश्वासः शास्त्रवासी[5] मम भवतु सता[6] तेन साकं निवासः ॥ ७९ ॥

दूनानानन्दयन्तो मृदुपदवचनैः सान्द्रमानैश्च दानैः
विन्दन्तो मोदमिद्धं परगुणकथने नान्यनिन्दां वदन्तः ।
भिन्दन्तो नावधिं स्वं न च मदपदतामुद्वहन्तो धनाद्यैः
कीर्त्येन्दुं मन्दयन्तो दममतिदधतः सन्तु सन्तो हृदन्तः ॥ ८० ॥

सन्तो भालेन्दुनामावलिलपनभवाह्लादकल्लोललीनाः
सोल्लासं शीलपाला बलिकलिकलुषक्षालिनो लीलयैव ।
उल्लोलैरप्रचाल्याः सुललितललनालापबालप्रलापैः
संपल्लाभेऽप्यलोभाः सकलविकलतोन्मूलिनः शीलनीयाः ॥ ८१ ॥

बोधाधारोऽनधीनो विषयपरिषदः प्रान्तबाधाविधात्र्याः[7]
दीनोद्धारानुबन्धी गुरुविबुधमुदे संविधासंविधायी ।
अक्रोधोऽन्यापराधश्रुतिविधिविधुरा धीरधीराधिरोधी
संधासार्थ(?)व्युपाधि[8]र्मधुमधुरवचाः साधुराराधनीयः ॥ ८२ ॥

---

१. स्वेच्छयेत्यर्थः । २. रसानुभवः । ३. अन्यानुग्रहार्था प्रवृत्तिरित्यर्थः ।
४. अनुशासनम् । ५. शास्त्रे श्रद्धा । ६. गुरुरूपेण साधुना सह ।
७. अवसानविरसाया इत्यर्थः । ८. विगतोपाधिः ।

CC-0.Central Sanskrit University.Digitized by eGangotri

## ॥ अथ गुरुः ॥

कायस्थैर्याय चर्यामृतुषु समुचितां हन्त कुर्वन्त्यनार्याः
कस्मै कार्याय गिर्यादिवदविचलता देहिनां हा कदर्या[1] ।
तार्यस्तर्या यया ऽसावुरुभवजलधिर्भावव(च)र्यानिलात्ये(र्यै)-[2]
रार्याभार्यात्मकस्य[3] प्रविदधति गुरोस्तां तदार्याः सपर्याम् ॥ ८३ ॥

वामाः कामादयोऽमी हृदयबिलगता दूरतो यान्ति भीमा
मर्माण्याबाधमानाः पृथुमहिमगुरोर्नाममन्त्रोक्तिमात्रात् ।
आदायायव्ययायाभिरति[4]मुरुभयामात्मनेऽपायदायी
भूयोभूयो जडाये[5] किमु न भजसि तं निर्भयायाश्रयाय ॥ ८४ ॥

सेवामेवानु देवा ददति बत न वा साधु वा साध्वभीष्टं
नैते दावाग्निवाम्यं[6] भवमुपशमयन्त्यत्र सौवानुभावात्[7] ।
कर्णे वाक्यप्रवाची[8] स तु जयति गुरुः सर्वदेवाभिधान्वा (वान्?[9])
दैवावाप्तः सुनिर्वापयति भवदवं यो दयावाःप्रवाहैः ॥ ८५ ॥

## ॥ अथ शङ्करः ॥

हेतेर्भीतेर्भवो[10] मे बत गहनतया दाव एवेति मन्ये
[11]कर्मैधैस्त्रिप्रभेदैर्यदयमनुगतोऽनूनजीर्णातिजीर्णैः ।

---

१. देहिनां गिरिवद्चलता कदर्या कष्टा । २. भावो भक्तिः, चर्या क्रियायोगः, अनुष्ठानम्; ते एव प्रेरकीभूतः अनिलः; आद्यशब्देन कूपदण्डः, अरित्रमित्यादि तरी-अङ्गानि ग्राह्यानि । ३. पार्वतीपतिस्वरूपस्य ।

४. आयव्ययाय उरुभयामभिरतिमादाय आत्मनेऽपायदायी त्वमित्यन्वयः । ५. जड अये इति च्छेदः ।

६. दावाग्नेर्वाम्यं वैपरीत्यं यस्य तं भवम् । ७. सौवः स्वीयः अनुभावः, तस्मात् ।

८. कर्णे मन्त्रोपदेशकर्ता । ९. सर्वदेवात्मक इति यावत् ।

१०. भवः संसारः । ११. कर्मेन्धनैः ।

CC-0.Central Sanskrit University.Digitized by eGangotri

नानाकारैरसारैर्विषयतृणचयैश्चान्वितो यत्तदेनं
शंभो भो मारदाहिन् पुरमथन गुरो त्वं दहेरग्निमूर्तिः ॥ ८६ ॥

भ्राम्यन् दीनं रुवन् नृभ्रमर[1] भववने लेक्षि किं भिक्षयाल्पं
[2]पक्षादक्षो रसं दुर्विषयकुसुमजं कालसंज्ञानिलार्तः ।
गत्वा त्वानन्दवत्यां(न्यां)[3] पिब शिवमुकुटाम्भोजजातं प्रभूतं
गङ्गाम्भोमध्वरुद्धभ्रमणकृततक्लान्तिशान्त्येकहेतुम्[4] ॥ ८७ ॥

यो(?)गाद्धोगाच्च जातां क्षणमपि सुखितां यो न यातोऽर्थतातो[5]
माता भ्राताप्ययासीद्यदुरुधनगुणैर्नैव पोषं च तोषम् ।
सारासारार्थचिन्ताशिथिलितममताकण्ठनाहं[6] तदाहं
मा(या)यां मायान्तकारित्रिपुरहरपुरीं[7] सत्पुरीणां धुरीणाम् ॥ ८८ ॥

यातस्तातस्त्वकृत्वा मम हितमहितास्तावदेते समस्ताः
कामास्तान् कस्त्वदन्योऽस्तमधिगमयितुं वस्तुतः शक्त आस्ते ।
[8]दृङ्न्यस्त्या [9]कामशास्तस्त्वमनुपमदय स्तुत्य पूतप्रशस्ते
सच्छास्त्रोपास्तिवस्तू[10]पदिश किमपि मन्मस्तकन्यस्तहस्तः ॥ ८९ ॥

[11]अस्यामानंवदान्या (नन्दवन्या)मतुलफलभरैः सद्द्विजालीपरीतैः
रम्यायां हर्म्यवृक्षैर्मृदुलसुरनदीस्नातवातानुयातैः ।

---

१. हे नरभ्रमर इति संबुद्धिः । २. पक्षयोरदक्षः । नरपक्षे असमर्थमता-वलम्बी । ३. आनन्दवन्यां काश्याम् । ४. अरुद्धम् अविरतं भ्रमणं तत्कृता तता बहला क्लान्तिः, तच्छान्त्येकहेतुः, तम् ।

५. अर्थरूपः पिता । ६. कण्ठनाहः कण्ठपाशः । ७. काशीम् ।

८. दृङ्न्यस्त्या दृष्टिन्यासेन । ९. कामशास्त इत्यारभ्य शिवसम्बोधनानि । १०. उपास्तिवस्तु उपासनाविषयम् ।

११. आनन्दवन्यां काश्याम् । फलानि वृक्षजानि, ऐहिकामुष्मिकाणि । द्विजाः पक्षिणो ब्राह्मणाश्च ।



CC-0.Central Sanskrit University.Digitized by eGangotri

खेदच्छेदः कदा स्यात्प्रभ[1] भव भवतोन्नामितावामकर्ण[2]
लम्बस्वापावलम्बात् सततभवपथश्रान्तितः श्रान्तिभाजः ॥ ९० ॥

शंभो किं मां विभो हा तयितु[3]मिह न भो भावमालम्बसे त्वं
नो याचे भोगिभोगोपमितिसह[4]महं भोगमत्रेष्टभोगः ।
नो वा रम्भोरुकुम्भोपमकुचभजनं योगिदम्भोलिपाणे[5]
किं त्वम्भो मुक्तदम्भोऽर्थय उपरतये भो नभोनिम्नगायाः[6] ॥ ९१ ॥

या गङ्गाऽपास्य गङ्गाधरमुकुटमगाद्गां तदाज्ञाप्रसङ्गात्[7]
कर्तुं जीवाननङ्गान्[8] रतिगतइयतान्(?)[9] दुःखभङ्गानुषङ्गात् ।
[10]अङ्गाभूदै(दैं)वभङ्गात्यजथ बत वनीवायुसङ्गाद्विहङ्गा (?)
यद्वत्किं भक्तिगङ्गा कथमपि सहते बह्वनङ्गान् रतिर्नः ॥ ९२ ॥

[11]रङ्काश्श्रेयान्ति शङ्कामिह बहुमृतितस्तैरलं काय एषोऽ-
लङ्कार्यो गाङ्गपङ्कादिभिरमृतपुरे[12] भीतिरेवं ध्रुवं का ।
आतङ्कानर्हिं(हें)मङ्काधिगतगिरिसुतं यातु तं कालजेतुः
भावं[13] कालात्कलङ्काविषयमपि नतं बाणलङ्काधिपाद्यैः[14] ॥ ९३ ॥

---

१. 'मम' इति अत्र शुद्धः पाठः स्यात् । २. भवता शिवेन उन्नामितः अवामो दक्षिणः कर्णः यथा तथा । लम्बो दीर्घः स्वापः मरणमित्यर्थः । काश्यां म्रियतो नरस्य दक्षिणकर्णे शिवेन राममन्त्रोपदेशः क्रियते हि ।

३. तय रक्षणे इति धातुः । ४. सर्पालिङ्गनसदृशम् । ५. योगीन्द्र इति यावत् । ६. दिव्यसरितः गङ्गायाः अम्भः अर्थये ।

७. शिवाज्ञाप्रसङ्गात् । ८. मुक्तान् । अत्र काम इत्यर्थान्तरेण श्लेषः । एवं रतिशब्दे च भक्तिगतोऽनुरागभावः कामपत्नी चेति श्लेषः । ९. उपरि अशुद्धा मातृका । रतिगतहृदयान् इति स्यात् । १०. तृतीयपादोऽशुद्धः, तुरीयः शुद्धोऽपि दुरन्वयः ।

११. कृपणाः । १२. काश्याम् । १३. कालात् क्रमेण कालजेतुः भावं शिवस्वरूपं यातु इत्यन्वयः । अन्यत्सर्वं शिवस्वरूपविशेषणम् ; १४. बाणरावणाद्यैर्नतम् ।

CC-0.Central Sanskrit University.Digitized by eGangotri

भुञ्जन्दायं[1] स कायं भृतजर[2]मवयन् भाव्यपायं[3] बतायं
तत्रोपायं स्थिरायं[4] सपदि वितनुतामेतमायंस्तु[5] काशीम् ।
[6]रायं दत्वान्तरायं गिरिशगुणगणं साधु गायन्नमायं
पायंपायं द्युनद्याः सलिलमनुसरेत्तं सदम्बासहायम्[7] ॥ ९४ ॥

[8]भूरीभूतार्तिधारी क्षितिभृदनुचरीभावतः पुत्रनारी-
पोषायोद्योगकारी गहनगिरिदरीवार्धिवारिप्रचारी ।
[9]दूरीकर्तुं शरीरी श्रममिममुररीकर्तुमन्ते स्मरारी-
भावं चार्यानुसारी[10] पिबतु शिवपुरीसिन्धु[11]वारीण्यवैरी[12] ॥ ९५ ॥

यातायातानि कामं महति भववने कर्मशक्तैः क्रियन्तां
कान्तासन्तानवित्तादितरुफलरसं पातुमापातरम्यम् ।
किंतूमाकान्तकल्पद्रुममुकुटफलश्च्योतदानन्दवन्यां
[13]स्थाता पातास्मि दत्तामृतममृतमहं क्लान्तिशान्त्यै नितान्तम् ॥ ९६ ॥

[14]शस्तायस्तात्मचिन्ताविरहितमनसस्तामतस्तापजाता-
ज्जन्तोस्तावन्निरस्तापरणु[15]भजनतस्तारणः स्तावकानाम्[16] ।

---

१. स्वं भागम् । २. भृता जरा यस्मिन् तादृशं कायम् । ३. भाव्य-पायम् अवयन् जानन् । ४. स्थिरः अयः शुभावहो विधिः यस्य तम् । अथवा स्थिरः आयः लाभः यस्य तम् । ५. आयन् तु काशीम् । ६. अन्तरायभूतं रायं धनं परेभ्यो दत्त्वा । ७. 'सदम्बा' इत्यत्र 'सदाम्बा' इत्यपि स्यात्पाठः ।

८. बह्वार्तिधरः । क्षितिभृदनुचरीभावः राजसेवा, ततः । ९. इमं श्रमं दूरीकर्तुम् । अन्ते शिवभावमुररीकर्तुं च । १०. आर्यानुसारी सज्जनानुसारी । ११. शिवपुरी काशी, तत्रस्था सिन्धुः गङ्गा । १२. अवैरी सन्नयस्तवैरभावस्सन् ॥

१३. आनन्दवन्यां काश्यां स्थाता, दत्तामृतम् अमृतत्वदायि । अमृतं जलं गाङ्गं पातास्मि पिबन् अस्मि ।

१४. एतावत्पर्यन्तं काशीस्थगङ्गाविषयकाः श्लोकाः । इतः परं तत्रत्यशिवपराः श्लोकाः । शस्तः हिंसितः आयस्तः तादृशः आत्मचिन्ताविरहितमनाश्च, तस्य । तापजातात् तापत्रयजायात् तामतः खेदतः । १५. अत्र अशुद्धा मातृका । १६. स्तावकानां स्तोतॄणां तारणम् ।

CC-0.Central Sanskrit University.Digitized by eGangotri

मृत्योः शास्ता समस्तार्थिजनसुरतरुस्तारभाः(क्) तारकारेः[१]
स्तावन्ते (वान्ते)[२]मे पुरस्ताच्छिवपुरि वसतस्तारकाख्यातये स्तात् ॥ ९७॥

लोभात्त्वां वासयित्वा स्ववदनसदने [३]गीर्मयापा(या)सितासि
त्वं नित्यं [४]चित्तबन्धोचितविविधगुणान् गुम्फयित्वा भवत्या ।
नृभ्यो विक्रेतुमिष्टान् [५]कदुदरभृतये फ्लन(?)[६] तन्मे शयाना
जिह्वामञ्चे विमुञ्च श्रममसमसुमास्वामिनामोपधाना[७] ॥ ९८ ॥

[८]गौरीकान्तार्थिपालिन् भव गर(ल)गरलिन् भर्ग हेरम्बबालिन्
शंभो भालाग्निशालिन् मृड मृतिकबलिन् कृत्तिवासः कपालिन् ।
शूलिन् द्योसिन्धुधारिन् गिरिश हतकरिन् उग्र सर्गापहारिन्
भीम प्रेतानुसारिन् शिव वसतिहरिन् मारजिद्भूतिभारिन् ॥ ९९ ॥

[९]शर्व प्रोद्यत्कुमार प्रहतमख हर व्योमकेशाहिहार
स्थाणो वेदान्तसार त्रिपुरजिदपर श्रीकपर्दिन्नपार ।

---

१. तारकारेः स्वपुत्रात् स्कन्दात् तारभाक् प्रणवार्थोपदेशभाक् । २ स्तावान्ते अस्य स्तोत्रस्य अवसाने तारकाख्यातये तारकमन्त्रोपदेशाय । काश्यामन्त्यकाले सर्वस्यापि जन्तोः कर्णे शिवस्तारकमन्त्रमुपदिशतीप्र प्रसिद्धिः ।

३. हे गीः वाणि ! ४. चित्तबन्धोचितान् नरस्तुतिरूपान् नृभ्यो विक्रेतुमिष्टान् विविधगुणान् भवत्या गुम्फयित्वा । ५. कदुदरभृतये कुत्सितजठरपोषणाय । ६. अत्राशुद्धा मातृका । ७. उमानाथनामैव उपधानं कृत्वा जिह्वामञ्चे शयाना असमं श्रमं विमुञ्च ।

८. अत आरभ्य पञ्च श्लोकाः शिवसम्बोधनपराः, यत्र अष्टोत्तरशतं शिवनामानि दत्तानि । अर्थिपालक । हेरम्बरूपो बालो यस्य । मृतिकबलिन् अन्तकान्तक। हतकरिन् गजान्तक। सर्गापहारिन् संहारमूर्ते। वसतिः वासः हरितः दिश एव यस्य । अथवा 'वसनहरित्' इति पाठः, दिगम्बर इत्यर्थः ।

९. अत्रापि तथैव । प्रोद्यत्कुमार कुमारजनक । प्रहतमख मखध्वंसिन् । अपर पररहित ।

CC-0.Central Sanskrit University.Digitized by eGangotri

[1]आत्मारामाविकारेश्वर जननहरेशान्त(त्त)लीलावतारे-<br>
शाण(न) प्रौढाङ्गहारेडित दयितगिरेऽर्धाङ्गदारान्धकारे ॥ १०० ॥

विश्वादे विष्णुबाण[2] त्रिगुण गतगुण[3] श्रीदमित्र[4] प्रमाण-<br>
व्यापिन् [5]नन्दिप्रयाण क्षितिरथ शरण त्र्यक्ष गायत्पुराण ।<br>
मल्लारेऽन्यानधीन [6]द्रुहिणकहृतिकृत्स्थूलविश्वात्मलीन<br>
श्रीकण्ठाद्यन्तहीन प्रणवसुवदन प्रेष्ठ दीनप्ररेक[7] ॥ १०१ ॥

सर्वज्ञ ख्यातदानोच्चपद मृदुमनो भैरवाध्यस्तसानो[8]<br>
भास्वन्हस्तात्तजानो भव धवलतनो शङ्कराक्षीन्दुभानो ।<br>
ज्ञानाब्धे हृद्यगीते वरद गणपते विश्वनाथास्तभीते<br>
भूतेशालोकरीते मुनिमत सुगते रुद्र नागोपवीते ॥ १०२ ॥

[9]नीलारक्ताग्निरेतोऽजगवभृदजितोदारलीलोक्षकेतो<br>
गुर्वात्मन् धर्मसेतो पशुप चितिरतोपात्तसोमात्महेतो ।

---

१. अविकार; ईश्वर; जननहर; ईश; आत्तलीलावतार; ईशान; प्रौढः अङ्गहारः तदाख्यं नृत्तकर्म यस्य सः; ईडित; गिरिप्रिय; अर्धाङ्गकृतदार ।

२. त्रिपुरवधसमये सायकीकृतविष्णो; ३. गुणत्रयमय; निर्गुण; ४. कुबेरसख । ५. प्रमाणभूत; अथवा प्रमाणव्यापिन् आगमादिप्रमाणानि व्याप्य तिष्ठन् । ५. नन्दिवाहन । क्षितिः त्रिपुरवधसमये रथो यस्य । गायन्ति पुराणानि यस्य सः; पुराणस्तूयमानमहिमन्नित्यर्थः । ६. द्रुहिणस्य ब्रह्मणः कं शिरः यस्य हृतिकृत् अपहारक । ७. दीनवदान्य; प्ररेकः दानशीलवाचको वैदिकः शब्दः ।

८. अध्यस्तसानो कैलाससानुवासिन् । हस्तात्तजानो इति आसनविशेषं निर्दिशति । हृद्यगीते इति शिवस्त गानागममूलत्वं सूचितम् । अलोकरीते लोकातीतस्वभाव । नागयज्ञोपवीतधारिन् ।

९. नीलारक्त नीललोहित; अग्निरेतः; अजगवं शिवधनुः, तद्बिभर्तीति; उक्षकेतो वृषध्वज; पशुप पशुपते; चितिरिति श्मशानमुपलक्षयति, तत्र रत; उपात्तसोम; आत्महेतो स्वयंभो ।

CC-0.Central Sanskrit University.Digitized by eGangotri

एवं संबोधनीयाष्टसहितशतया[1] नामपङ्क्त्याच्छकाया
दुर्वारस्फारमायाश्रमहरणधिया [2]व्यक्तिरेषाऽनपाया ॥ १०३ ॥

[3]गोपोदारप्रचारे ललिततरतनौ प्राप्तभामे कदाचित्
भिन्दाने नागदेहं विषमविषसखे भूतिपात्रेऽतिमात्रम् ।
अब्जेन भ्राजमाने सततधृतशिवे चित्तजन्मान्तहेतौ
चेतः सर्वं विमुच्यानुरज समतया त्वं मुरारौ पुरौवा (पुरारौ) ॥१०४॥

क्षीराब्ध्यम्भोविहारप्रिय निगमचर प्रस्फुरच्छङ्खमार[4]
श्रीकूर्मागाधसार स्थिरधरणिधर स्वाश्रयाकृत्युदार[5] ।
[6]पोत्रिन् दंष्ट्राकरालोद्धृतधर सवलोद्वेलसिन्धो दयालो
[7]पुंसिंह प्रेष्ठबालोत्कटसट धवलोद्भिन्नदैत्याशयालो ॥ १०५ ॥

[8]बल्यर्थिन् छद्मभारिन् द्विज पदजसरिन्नाकिपोच्चत्वधारिन्
[9]वीर क्षत्रान्तकारिन् भृगुसुत समरिन् मातृभेदिन् कुठारिन् ।

---

१. अष्टसहितशतया अष्टोत्तरशतसंख्यया । २. व्यक्तिरेषा, शिवस्येति शेषः ।

३. अत्रत्यानि पदानि श्लेषेण मुरारिपुरार्युभयपराणि । गोपो गवांपतिर्वृषभः, तेन यानभूतेन उदारप्रचार इति पुरारिपरमिदम् । मुरारिपक्षे गोपा व्रजवासिनः । प्राप्तो भामः कोपः येनेति रुद्रपक्षे ; कृष्णपक्षे प्राप्तसत्यभाम इति । नागदेहं भिन्दान इति उभयत्र हस्तिनाशकत्वं समम् । विषसखत्वं नीलकण्ठे तत्पायित्वात् । विषमविषे आदिशेषे इति शेषशायिनि, तत्सखत्वम् । भूतिर्भस्म, समृद्धिश्च । अब्जः सोमः, अब्जं कौस्तुभाख्यमपां रत्नम् । सततं धृता शिवा अङ्के येनेति अर्धनारीश्वरपक्षे । विष्णोः शिरसि शिवलिङ्गधारणं पाण्डुरङ्गक्षेत्रे प्रसिद्धम् । चित्तजन्मनः अन्तहेतुरिति मदनान्तकपक्षे; चित्तस्य जन्मनश्च अन्तहेतुरिति मोक्षदायिनि विष्णौ । अनुरज इत्यत्र भ्वादिर्धातुः ।

४. शङ्खासुरमारक । ५. स्वाश्रय स्वप्रतिष्ठ । आकृत्युदार इतिच्छेदः । ६. वराह । उद्धृता धरा येन । द्वितीयपादे सर्वं वराहावतारविशेषणतया नेयम् । ७. अस्मिन् पादे सर्वं नृसिंहावतारपरतया ग्राह्यम् । प्रेष्ठबालेत्यत्र बालः प्रह्लादः । भिन्नं दैत्यस्य हिरण्यकशिपोराशय एवालु हृदयमेव कन्दं येन ।

८. वामनत्रिविक्रमावतारपराण्यत्र सम्बोधनानि । नाकिप देवनायक । उच्चत्वधारिन् त्रिविक्रम । ९. सर्वमत्र परशुरामपरम् ।

CC-0.Central Sanskrit University.Digitized by eGangotri

[1]सीतेशाभ्राभिराम श्रितवन [2]सशमन्नातताता(त्रात आत्ता?)र्थिकाम
[3]च्छन्नाब्धे वालिवान(?)श्रितभृतहनुमन् ग्रस्तलङ्केश राम ॥ १०६ ॥

[4]आपाण्डो कामपाल प्रधृतहल बल श्यामवासो विशाल
[5]श्रीबुद्ध श्रुत्यपाल प्रदय दशबल म्लेच्छभित् कल्किता(का?)ल[6] ।
[7]कृष्णाभीरच्छचेतः सुरभिप ललित श्याम गोपीसमेत
[8]व्यालारे कंसजेतर्नर मदनपितर्वासुदेव प्रणेतः ॥ १०७ ॥

[9]पद्मिन् राजत्कृपाणेतगद धृतमणे कम्बुभृच्चक्रपाणे
सूर्यात्मन् देव बाणेज्यतम इभश्रृणे श्रीपते शार्ङ्गपाणे ।
विष्णो पक्षीन्द्रकेतोऽच्युत गजप हितोदात्त लोकेश हेतो
पीतक्षौमानिकेतोदरजगदभि(मि?)तोदस्तभीर्लोकसेतो ॥ १०८ ॥

वैकुण्ठाम्भोधिशायिन् विधिप मधुजयिन् पुण्डरीकाक्ष मायिन्
चिन्मूर्ते वित्तदायिन्नविषम विषयिन् यज्ञभूः सोमपायिन् ।
भूयः शान्त्यै विशोकाष्टसहितशतकाख्याभिरालीनलोका
संबोध्यैवं [10]हृदोका विदलितकलिका मूर्तिरध्यस्तगोका ॥ १०९ ॥

---

१. रामावतारवर्णनम् । २. अशुद्धा मातृका । शमिनां त्रातृत्वं अर्थिकाम-पूरकत्वं च विवक्षितम् । ३. छन्नाब्धे सेतुबन्धनेनेत्यर्थः । उपरि वालिहन् आश्रित० इति स्यात् ।

४. बलरामस्य वर्णनमत्र । ५. श्रीबुद्ध श्रुतेरपाल अपालक । ६. म्लेच्छेत्यारभ्य कीकल प्रस्तूयते । कल्किनः पापिनः कलियुगीयाः तेषां कालः । ७. कृष्णावतारोऽत्र । कृष्ण अभीः अच्छचेतः इति पदच्छेदः । ८. व्यालारे कालियसर्पदमन । प्रकृष्टनेतः ।

८. अतः परं सामान्येन विष्णुः सम्बोध्यते ।

९. पद्मिन् पद्मनाभ । इता प्राप्ता गदायेन । देवबाण त्रिपुरवधे महादेवस्य बाणभूत । इज्यतम । इभश्रृणे हस्तिशिक्षक । गजप गजेन्द्ररक्षक । अथवा गजपहित गजेन्द्रानुकूल । हेतो सर्वस्येति शेषः । पीतक्षौम, अनिकेत, उदरजगत् ।

१०. हृन्निवासा । कलिका, गोका, इत्युभयत्र कलिः, गौः इति शब्दयोः स्वार्थे कप्रत्ययः ।

CC-0.Central Sanskrit University.Digitized by eGangotri

ज्ञातुर्दातुर्दयालोः सकलकलकुलालंकृतेर्मुद्गलाद् यः
प्राभूज्झापाम्बिकायां सुललितयमलग्रामधामा स सोमः ।
वैराग्यं प्राप्तुकामः स्वमृदुमतिलताजातया जाड्यचुञ्चुः
पञ्चाशतपद्यपुष्पा (ष्प्या) [1]द्विरकृत गिरिजाजानिपादाब्जपूजाम् ॥ ११० ॥

[2]मेनामादी मुरारे रणकृदमिततां सङ्गतो युक्तरामो
भीरिप्रीतीभ(?)[3]मेयामितिविभवकरोऽतीव सौख्यं प्रपन्नः ।
[4]भीमोरुर्मारमारो बहुमुख(ध)रताविश्रुतो दामिताहिः
शंभुर्भाग्याय भूयाद् हरिरिव भजतामत्र सोमस्य पद्ये ॥ १११ ॥

इति श्रीसकलकलोपनामककविवरसोमनाथविरचितं
शतकं समाप्तम् ॥

---

१. द्विः अकृत । पद्यशतकेनेत्यर्थः ।

२. अस्मिन्नन्त्ये पद्ये शम्भुहर्योस्समानि विशेषणानि । मेना श्वश्रूः तयां माद्यति पुत्रीहेतोरिति शिवपक्षे । मायाः लक्ष्म्या इनः पतिः, स चासौ अमादी मदरहितश्चेति विष्णुपक्षे । मुरारे रणकृद् विष्ण्वादिदेवकार्यार्थे त्रिपुराद्यसुरै रणकृत् इति शिवपक्षे । मुररूपस्य अरेः रणकृदिति विष्णुपक्षे । युक्तरामः बलरामसहितः; शिवपक्षे युक्ता रामा अर्धाङ्गे पत्नी यस्य सः । ३. अशुद्धा मातृका । ४. भीमश्चासावुरुश्च । मारमारः मन्मथमन्मथः सौन्दर्ये; इदं कृष्णपक्षे । अन्यत्र मारस्य मारकः । एकस्य सहस्रशीर्षप्रसिद्ध्या, अन्यस्य पञ्चवक्त्रत्वाच्चोभयत्र बहुमुखधरताप्रसिद्धिः समाना । दामितः शामितः अहिः कालियः येन । अन्यत्र दामितः मालीकृतः अहिः येन । भजतां भाग्याय भूयात् ।

CC-0.Central Sanskrit University.Digitized by eGangotri

## ॥ विबुधमोहनम् ॥*

### ॥ हरिजीवनमिश्रकृतम् ॥

**(पुष्पकलिका)**—श्रीगणनायको मङ्गलं तनोतु। अहो यद्राजद्वारस्य कथानकं पूर्वं मया श्रवणातिथित्वेन संभावितं तद्राजद्वारमिदानीं मम दृग्गोचरं याति, किमतः परम्। धन्यो विधाता। यतः—

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमुखमभिमुखीभूतः॥ १ ॥[1]

एवं हि तर्कयामि मृ(ग)[2]तदर्शनेनाद्य हृदयानन्दकन्दा(?)अहं भवामि। यतः—

यन्मनोरथशतैरगोचरं न स्पृशन्ति कवयो गिरापि यत्।
स्वप्नवृत्तिरपि तत्र (यत्र) दुर्लभा लीलयैव विदधाति तद्विधिः॥ २ ॥[3]

अहो दर्शनम्! अनेकजन्मपुण्यार्जितमेवेति नात्र सन्देहः। भवतु तावत्प्रणमामि।

कल्याणानां त्वमिह महसां भाजनं विश्वमूर्ते
पुण्यां लक्ष्मीमथ मयि भृशं धेहि देव प्रसीद।
यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे
भद्रं भद्रं वितर भगवन् भूयसे मङ्गलाय॥ ३ ॥[4]

---

*बीकानेरस्थ-अनूपपुस्तकालयस्थां प्रायोऽशुद्धां मातृकामेकां श्रीमाधवकृष्णशर्मणा प्रेषितामालम्ब्य मुद्रितम्। कविरेष हरिजीवनमिश्रः जयपुरमहाराजस्य रामसिंह-स्यास्थाने क्रि. सप्तदशशतक आसीत्। पञ्चषाणि प्रहसनानि अनेन विरचितानि। अत्र बहवः अन्यकविश्लोका उपयुक्ताः।

१. रत्नावल्यां १. ६. २. मातृकायामत्र मृत इति वा गत इति वा पठितुं शक्यते; उभयथाप्यर्थो न स्पष्टः। अपेक्षितस्त्वर्थः 'प्रभु'-इति। ३. सुभाषितावलौ शार्ङ्गधरपद्धत्यामपि। ४. मालतीमाधवे १. ५. अत्र प्रभुपरतया योजनीयोऽयं श्लोकः।



CC-0.Central Sanskrit University.Digitized by eGangotri

(उत्थाय) देव! विज्ञप्तिरेषा। श्रीमच्चरणकमलपरागामु(नु)रक्तहस्ता स्याम्।

[इति गत्वा पादयोः पतति।]

किमतः परं दुर्लभं मे पुष्पकलिकायाः। यतः—

दृष्टिः कृतार्था प्रभुदर्शनेन कर्णौ कृतार्थौ वचनामृतेन।
हस्तौ कृतार्थौ चरणप्रणामादतः परं किं मम भाग्यवत्याः ।। ४ ।।

[पुनः प्रणम्य, उत्थाय]

किमासनं ते गरुडासनाय किं भूषणं कौस्तुभभूषिताय।
लक्ष्मीकलत्राय किमस्ति देयं वागीश! ते किं कथनीयमस्ति ।। ५ ।।

भवतु तावत्। अपि ऋषयो द्रष्टारः खलु। अहो "नाविष्णुः पृथिवीपतिः" इत्यादिवाक्यं प्रमाणमेव। तथा हि "अष्टानां लोकपालानां मात्राभिः निर्मितो नृपः।"

किमधिकम्? प्रदक्षिणीकृत्यात्मानं पुनीमहे। अत्रैतत्प्रदक्षिणासंख्यायां संदिह्यते, श्रीप्रभोः सर्वात्मकत्वात्।

एकां देव्यां रवौ सप्त तिस्रो दद्याद्विनायके।
चतस्रः केशवे दद्यात् शिवस्यार्धां प्रदक्षिणाम् ।। ६ ।।[१]

भवतु तावत्प्रभुनाम्नैव प्रदक्षिणासंख्यायाः प्रकाशितत्वात्।

[प्रदक्षिणां करोति।]

यानि कानि च पापानि ब्रह्महत्याशतानि च।
तानि सर्वाणि नश्यन्तु प्रदक्षिणपदेपदे ।। ७ ।।

[इति प्रदक्षिणात्रयं कृत्वा नमस्करोति।]

---

१. बृहन्नारदीये

CC-0.Central Sanskrit University.Digitized by eGangotri

अये कृतदेवपूजाविधानस्य दक्षिणादानस्य नियतत्वात् मम परीक्षैव दक्षिणात्र समुचिता । परं तु प्रौढिमन्तरा कथं मां पण्डितपाण्डित्यप्राणडाकिनीं **पुष्पकलिकां** केचन ज्ञास्यन्ति । इति धाष्टर्चक्षमापणं प्रभुषु । युक्तं चैतत् । गल्लवाद्यविशेषेणैव तुष्टा भवन्ति जगदीश्वराः । भो भोः समाकर्णयन्तु सभ्याः

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान्प्रति नैव यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ ८ ॥[1]

किं चातिसत्यमेव वदामि

आमूलाद्रत्नसानोर्मलयवलयितादा च कूलात्पयोधे-
र्यावन्तस्सन्ति काव्यप्रणयनपटवस्ते विशङ्कं वदन्तु ।
मृद्वीकामध्यनिर्यन्मसृणमधुझरीमाधुरीभाग्यभाजां
वाचामाचार्यतायाः पदमनुभवितुं काऽस्ति धन्या मदन्या ॥ ९ ॥[2]

भवतु किमेतेन

किं कवेस्तस्य काव्येन किं काण्डेन धनुष्मतः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ॥ १० ॥[3]

स्मृतं स्मृतं भोः

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ ११ ॥[4]

---

१. मालतीमाधवे १. ८. २. रसगङ्गाधरे पृ. ८४. अन्ते स्त्रीलिङ्गेन किञ्चिदिव विपर्यासितः श्लोकः । ३. त्रिविक्रमकृतनलचम्प्वां १. ५. ४. हितोपदेशे ।

CC-0.Central Sanskrit University.Digitized by eGangotri

प्रसंगोपात्तकथने न दोषः ।

मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
अशुभं वाक्यमादत्ते पुरीषमिव सूकरः ॥ १२ ॥[१]

त एव स्तुत्या भवन्तु महाकलिकाले, किमस्माकं सत्पुरुषाणां चिन्तनन्तु (नेन?)।

पातालात् स समुद्धृतो न तु बलिर्मृत्युर्न नीतः क्षयं
नोन्मृष्टं शशिलाञ्छनं स्यु(खु)मलिनं नोन्मूलिता व्याधयः ।
शेषस्यापि धरां विधृत्य न कृतो भारावतारः क्षणं
चेतः सत्पुरुषाभिमानपदवीं न त्वं वहद् लज्जसे ॥ १३ ॥[२]

युक्तं चैतत्

नो(ये) दीनेषु दयालवः स्पृशति यान्स्वप्नेऽपि न श्रीमदो
व्यग्रा ये च परोप(कार)करणे हृष्यन्ति ये याचिताः ।
स्वस्थाः सन्ति च यौवनोदयमहाव्याधिप्रकोपेऽपि ये
तैः स्तम्भैरिव सुस्थितैः कलिभरक्रान्ता धरा धार्यते ॥ १४ ॥[३]

अहह ! किं बहूक्तेन ।

अन्तः कोपकषायितेऽपि हृदये साधोरसच्चेष्टिते
भद्राण्येव बहिः क्रियासु वचनान्याविर्भवन्त्यर्थतः ।
मध्ये दुःसहवाडवव्यतिकरं प्राप्तेऽपि वारांनिधौ
कल्लोलाः प्रकटीभवन्ति सततं मुक्ताफलोद्गारिणः ॥ १५ ॥[४]

---

१. महाभारते । २. शार्ङ्गधरपद्धत्याम् ।
३. सूक्तिमुक्तावल्याम् । ४. सूक्तिमुक्तावल्याम् ।

CC-0.Central Sanskrit University.Digitized by eGangotri

भवतु तावत्; स्वल्पारम्भाः क्षेमकराः। इदानीं **विबुधमोहनरूपका**भिनयेन विलम्बो भविष्यतीति मातृभगिन्यादीनां दर्शनोत्कण्ठयात्र स्थातुमशक्ताहं श्रीप्रभोराज्ञया गन्तुमिच्छामि। (प्रणम्य) कथं हि भक्तवत्सला जगदीश्वराः दास्यभिलषितमेव साधयन्ति।

[इति निष्क्रामति। पुनः प्रविश्य]

उद्यद्बाहुलतागतागतपरिस्फूर्जत्स्रुवेणीभर-
त्स(श्रा)म्यद्भृङ्गव(घ)नान्तरंप्रविलसद्वक्त्रेन्दुकान्तेः श्रियः।
सीत्कारामृतमाधुरीझरभरं विम्बाधरं यः पिबन्
गाढाश्लेषचतुर्भुजः स च हरिः पायात्सदा सज्जनम् ॥

[नान्द्यन्ते सूत्रधारः]

अलमतिविस्तरेण। सांप्रतं तु - अहो स्वपुत्रवर्गे निहितगार्हस्थ्यभारस्य शान्तरसनिमग्नस्य **सकलागमाचार्यस्य** राजसंभावनं विना कथं योगक्षेमनिर्वाहः? महाकालकूटप्रतिनिभे म्लेच्छकवलिते कालेऽस्मिन् तत्पुत्रा अपि स्वस्वशास्त्रसिद्धान्तासक्तहृदयाः व्यापारान्तरं न क्षमन्ते। तत्कन्यापि अर्थालंकारसमुत्सुका **साहित्यमाला अखण्डानन्द**नायकेन कथं परिणेतव्या, तेषामुद्योगमन्तरा? अतोऽत्र कठिन इव प्रकारः प्रतिभाति। किं च कविपूज्यायाः **पुष्पकलिकायाः** निर्मितिः **किं न** नियमरहिता? किं करोत्य(त्व)यं जनः। **विबुधमोहनरूपका**भिनयोऽभिनेय इति सदस्याज्ञा। भवतु तावद्गुतंरूं (द्गुरूक्तं) स्मरामि। यत :—

गुरुरेव सदा सहायतां व्रजति क्षुद्रधियां च मादृशाम्।
सुदृशां हि तमस्सु नित्यशो रविरेणो (?) विषयं (यः ?) प्रकाशते ॥

[नेपथ्ये। साधु, भोः साधु। गुरुरेवेति पुनः पठ।]

CC-0.Central Sanskrit University.Digitized by eGangotri

(आकर्ण्य, सोल्लासम्) अये सकलागमाचार्यस्य गृहीतभूमिकः पारिपार्श्वक इव संलक्ष्यते । भवतु तावद्गत्वा सामाजिकानभिनन्दये ।

[इति निष्क्रान्तः ।]

। प्रस्तावना ।

[ततः प्रविशति **सकलागमाचार्यः** ।]

**सकलागमाचार्यः**—(गुरुरेवेति पठित्वा) कस्सन्देहः । एवमेव । यतो ज्ञानरूपेण गुरुणा प्रेरितेन राजदर्शने पुत्रान् विनियोजयता मया युक्तमभिहितम् । नो चेत् अग्निहोत्रमत्तमातङ्गोपासनं **साहित्यमालायाश्चाखण्डानन्देन** सह परिग्रहः कथं स्यात् ?

[नेपथ्ये कलकलः । आकर्ण्य]

प्रायः पण्डितचर्चोत्सुकः **प्रतापमार्ताण्डो** नाम राजा सभामलंकर्तुमुद्युक्तः । (विलोक्य) युक्तोऽयं मदीयस्तर्कः, आगत एवैष राजा । तद्गत्वा पुत्रान्प्रेषयामि ।

[इति निष्क्रान्तः ।]

[ प्रविशति आसनस्थो राजा विदूषकश्च ।]

**राजा**—वयस्य ! कथमधुना [स] सत्वरः श्वासपर्याकुल इव प्रतिभासि ।

**विदू०**—किं भणामि । दिट्ठं दे राअदुआरं । (किं भणामि, दृष्टं त्वया राजद्वारम् !)

**राजा**—वयस्य केनावमानितोऽसि ?

**विदू०**—अवमाणणं हि माणुसकज्जं । तं कत्थम्ह सुजणस्स विसादो इति पीडाओ मरामि । (अवमाननं हि मानुषकार्यम् । तत् कुत्र मम सुजनस्य विषाद इति पीडितो मरिष्यामि ।)

CC-0.Central Sanskrit University.Digitized by eGangotri

राजा—यथार्थं किं न वदसि ?

विदू०—जइ अण्णहा ता सवामि बम्हसुतेहिं । (यदि अन्यथा तत् शपामि ब्रह्मसूत्रैः ।)

[इति उपवीतं दर्शयति।]

राजा—वयस्य! सदा सत्यप्रतिज्ञस्य तव सर्वं सत्यमेव । किमेतेन ।

[नेपथ्ये कलकल: ।]

विदू०—(आकर्ण्य) भो वअस्स! एहि एहि गच्छम्ह । जदो एदे भेरअपिआ चउप्पदा महासदं पआसअन्तो पुव्वं विअ मं दंसइस्सन्ति । (भो वयस्य! एहि एहि गच्छाव । यत एते भैरवप्रियाः चतुष्पदाः पूर्वमिव मां दंशयिष्यन्ते ।)

[प्रविश्य दौवारिकः]

दौवारिकः—देव! [दे] वं(पं)डिआ अखण्डाणंदेण सह दुवारि वट्टन्ति दंसणोच्छुआ[1] । (देव! पण्डिता अखण्डानन्देन सह द्वारि वर्तन्ते दर्शनोत्सुकाः ।)

विदू०—(सहसोत्थाय) देव मए पुव्वमेव्व भणिदं एदे चउप्पदा एत्थ विआ अच्छिअ [?] सुरूपं पआसइस्संदि । ता हं गमिस्सं ।

(देव! मया पूर्वमेव भणितम् एते चतुष्पदा अत्र ........स्वरूपं प्रकाशयिष्यन्ति । तावदहं गमिष्यामि ।)

राजा—(विहस्य) भीरो! अलं भयेन । त्वम् एतादृश एव महासहृदयः । (दौवारिकं निर्दिश्य) साधुं (धु) प्रवेशय ।

---

१. अत्र प्राकृते श्लेषः, दंशनोत्सुका दर्शनोत्सुका इति उभयथा छायायाः शक्यत्वात् ।

CC-0.Central Sanskrit University.Digitized by eGangotri

**दौवा०**—तह (तथा)। (इति निष्क्रम्य पण्डितैस्सह प्रविश्य) हे हे पण्डिआ एत्थ रण्णो पुरदो अपुच्छं वि कहणं ण जुत्तं (हे पण्डिताः! अत्र राज्ञः पुरतः अपृष्टं किमपि कथनं न युक्तम्।)

**पण्डिताः**—(ससंभ्रमम्) कथमिदानीं विचारं विनाशीनं (शीर्वचनं) कर्तव्यम्?

[इति विचारयन्ति। तावत्—]

**तर्ककर्कशः**—अत्र राजविद्वत्सदसि यद्यपि तर्ककर्कशस्य मे पुरतः वक्तुं कोऽस्ति (कोऽपि न) समर्थः, तथापि ईश्वर एव समानाधिका(क)रणोत्तरेण प्रतिष्ठां स्थापयतु। तस्येश्वरस्य कर्तृत्वेन सिद्धत्वात्।

[ततो विदितवेदान्तवृत्तान्तो **ज्ञानेन्द्रः**]

**ज्ञानेन्द्रः**—अहो कथमविद्याविलासः! शाश्वते सद्ब्रह्मण्यसदारोपः!

**भट्टमीमांसकः**— (साट्टहासम्) भवत्वेतेषां कर्मणो वैफल्यमेव मूढधियां, हानिर्न कापि यज्ञपुरुषभाजाम्।

[तावत्]

**सांख्यानन्दः**—कथमेतेषां प्राकृतानां मुखात् प्रकृतिनामापि न श्रूयते!

**पातञ्जलनाथः**—एवमेव, सुष्ठूक्तं भवता।

**वैशेषिकभट्टाचार्यः**—(हि) हे भ्रातस्तर्ककर्कश! तावदेते कूपमूण्डूका इव वलान्तः (पल्वलान्तः?) स्वगतिं प्रकाशयन्तु, यावत्तर्कतीक्ष्णग्रीष्मातपो न प्रसरति। अस्ति नित्यज्ञानवानीश्वरः, सर्वज्ञः पृथिव्यादिकार्यहेत्वनुमितः। स च जीवाद्भिन्न एवेति। एतन्निरूपितमेव आशीर्वचनं कर्तुं युक्तम्।

**भट्टमीमांसकः**—नास्ति सार्वज्ञ्याद्युपेतं ब्रह्म। आम्नायस्य क्रियापरत्वेन तत्र नान्यथाभावात्। किं च वाग्धेन्वादिवत्[1] सर्वज्ञत्वादिदृष्ट्या जगत्कारणं

१ 'वाचं धेनुमुपासीत' इत्याद्युपासनावाक्यादाविवेत्यर्थः।

CC-0.Central Sanskrit University.Digitized by eGangotri

परमा(णुः) एवादिजीवो वा उपास्यते । इति कथं तन्निरूपितमाशीर्वचनं युक्तम् ?

[अथ]

**सांख्यानन्दः**—जगत्कारणं च प्रधानमचेतनं विहायान्यैव (न्यथैव) वदन्ति मूढाः ।

**पाशुपतः**—पशुपतिरेव जगत्कारणम् । स च चेतनो जीवाद्भिन्नस्तदुपास्य एवेति कथं न युक्तं तन्निरूपितमाशीर्वचनम् ?

**पाञ्चरात्रिकः**—भो भोः सत्यमेवेदं, किन्तु भगवान्वासुदेवो जगत्कारणम् । तस्मादुत्पद्यते सङ्कर्षणाख्यो जीवः, तस्मान्मनसः प्रद्युम्नः, ततोऽहंकारोऽनिरुद्धः । तेन कार्यत्वाज्जीवस्य तेन सह ब्रह्मणो वासुदेवस्याप्यत्यन्ताभेदः ।

**पातञ्जलनाथः**—किं बहूक्तेन ? क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषो नित्यज्ञानरूपः प्रमदोप (प्रणवोपपाद्यः, प्रणवोपास्यः ?) अद्वितीयपरमानन्द एव ब्रह्म । तच्च जीवस्य वास्तवं रूपम् । मायया च सर्व(प्र)धानांशसत्त्वगुणप्रतिफलिततया सर्वज्ञः संसारिपुरुषविलक्षण एवेश्वरः ।

**ज्ञानेन्द्रः**—ज्ञत्वादिविशिष्टं जगदुपादानं निमित्तं चेति ।

[अखण्डानन्दस्तु सर्वमतमदोपमर्दकं वेदान्तिनमालिङ्ग्य]

**अखण्डानन्दः**—एवमेव, नात्र सन्देहः । परं तु श्रवणमनननिदिध्यासनैरनेकजन्मपरिश्रमसाध्यो ब्रह्मरसानुभवः । काव्यरसानुभवस्तु श्रवणसमनन्तरमेव विगलितवेद्यान्तरः प्रकाशते इति किं द्रविडमण्डकन्यायेन ? जिन(त)मस्माभिः साहित्यविद्योपासकैः । तथा हि-

जयति गिरिसुतायाः कामसंतापवाहि-
न्युरसि रसनिषेकश्चान्दनश्चन्द्रमौलिः ।



CC-0.Central Sanskrit University.Digitized by eGangotri

तदनु च विजयन्ते कीर्तिभाजां कवीना-
मसकृदमृतबिन्दुस्यन्दिनो वाग्विलासाः ॥[१]

(पण्डिताः सकटाक्षं परस्परमवलोकयन्ति ।)

**प्रतीहारः**—किं एदेहिंक्खणेहिं भट्टा आलोकयदि ?

(किमेतैः क्षणैः भर्ता आलोकयति ?)

[अखण्डानन्दः उपसर्पति । पण्डिताश्च तत्पृष्ठतः उपसृत्य]

**पण्डिताः**—हे हे अखण्डानन्द ! पुरतस्तवैव आशीर्वचनं युक्तम् ।

**अखण्डानन्दः**—(राजानमभिलक्ष्य)

वक्त्राणि पञ्च कुचयोः प्रतिबिम्बितानि दृष्ट्वा दशाननसमागमनभ्रमेण ।
भूयोऽपि शैलपरिवृत्तिभयेन गाढमालिङ्गितो गिरिजया गिरिशोऽवताद्वः ॥[२]

**राजा**—(प्रणम्य, सर्वानुपवेश्य) अहो साहित्यरसानुभवो ब्रह्मरसादप्यधिक एव । नात्र सन्देहः ।

**अखण्डानन्दः**—एवमेव, कः सन्देहः । तत्रापि शृङ्गारस्यैवाभ्यर्हितत्वम् । (इति लक्षीकृत्य)

मुग्धे मुग्धतयैव नेतुमखिलः कालः किमारभ्यते
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ।
सख्यैवं प्रतिबोधिता प्रतिवचः तामाह भीतानना
नीचैः शंस हृदि स्थितो हि ननु मे प्राणेश्वरः श्रोष्यति ॥[३]

[पठित्वा अखण्डानन्दः संमोहं नाटयति ।]

[राजा—स्वयमपि पुनःपुनः 'मुग्धे' इति पठति ।]

**पण्डिताः**—(ससंभ्रमं स्वगतं) जितमस्माभिरिति सम्यक् प्रतिज्ञातमनेनाल्पविवेचेन ।

---

१. नलचम्प्वां १.१. २ अलङ्कारकौस्तुभे उदाहृतम् । ३. अमरुशतके ७० .

CC-0.Central Sanskrit University.Digitized by eGangotri

[इत्यवनिग्रीवाः भूमिं लिखन्तः तिष्ठन्ति।]

**राजा**—(सानन्दम्) अहो अखण्डानन्दस्य सरस्वती! (सगद्गदं पुनरपि 'मुग्धे' इति।)

**पण्डिताः**—(परस्परं सकोलाहलम्) राजन्! इदं पद्यं दूषितमेवास्माभिः। यतो ऋजुतादूरीकरणमेवानौचित्यप्रकाशरूपं महद्दूषणं वज्रलेपायितम्।

**विदू०**—[उच्चैः] भो भो प्पईहारा लउडं समाणअंतु। जदो एदाणं भेरअप्पिआणं लउडप्पहारं विणा गंठिमोअणं कहं वि होदि।

(भो भोः प्रतीहारा लकुडं समानयन्तु। यतः एतेषां भैरवप्रियाणां लकुटप्रहारं विना ग्रन्थिमोच(ट?)नं कथमपि भवति।)

[इत्यभिधाय राजांविके(तिकं) गत्वा]

देव मए पुव्वेव्व भणिदं जं खु ए(दे) भेरअप्पिआ महासद्दं प्पआसअंतो मं दंसइस्संदित्ति ता परित्ताहि [र] तुमं।

(मया पूर्वमेव भणितं यत्खलु एते भैरवप्रिया महाशब्दं प्रकाशयन्तो मां दंसयिष्यन्ति इति। तत् परित्रायस्व त्वम्।)

**अखण्डानन्दः**—(तेषां कोलाहलं श्रुत्वा, नयने समुन्मील्य, विहस्य) भो भोः शास्त्राभ्यासप्रसक्तानामृजूनां युष्माकं ऋजुतादूरीकरणमनुचितमिति स्थाने।

[1]कुरुभारांतीरिहासिले स्यौद्धत्य मार्जो जय?
कुग्रामप्रमदाविलासरसिकः कान्तस्त्वयाऽऽसादितः।
नायं नन्दिनि नागरीजनसमाचारैः समाकृष्यते
कौटिल्यं नयने निवारयतरां शीघ्रां गतिं शीलय॥

(व्यक्तार्थं) राजन्! अपूर्वं पाण्डित्यमेतेषां, किं वदामि?

---

१. अशुद्धः पादः।

CC-0.Central Sanskrit University.Digitized by eGangotri

**राजा**—(विहस्य) जितं व्याञ्जनिकैः ।

[पण्डिताः अपसर्तुमिच्छन्ति]

**विदू०**—(संस्कृतमाश्रित्य)

अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ।
ये भूता विघ्नकर्तारः ते नश्यन्तु शिवाज्ञया ॥

**अखण्डानन्दः**—(विलोक्य)

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥[1]

अपि च—

तावच्चकोरचरणायुधचक्रवाक-
पारावतादिविहगाः कलमालपन्तु ।
यावद्वसन्तरजनीघटिकावसान-
मासाद्य कोकिलयुवा न कुहूं करोति ॥[2]

अपि च—

खद्योतो द्योतते तावद्यावन्नोदयते शशी ।
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ॥[3]

अपि च—

ज्योतिरिङ्गण ! कथं न लज्जसे खेचरन्निशि तमःप्रशान्तये ।
एतदेव बहु किं न मन्यसे यत्त्वमेव तिमिरेऽपि लक्ष्यसे ॥

**राजा**—हे हे अखण्डानन्द ! सत्यं त्वं यथार्थनामासि । किंचिदपि स्ववचनामृतेन सिञ्चास्मत्कर्णकेदारिकाम् ।

---

१. अमरुके २७. २. सुभाषितरत्नभाण्डागारे उद्धृतोऽयं श्लोकः । ३. शा. पद्धतौ ।

CC-0.Central Sanskrit University.Digitized by eGangotri

अखण्डानन्दः—क्वास्ति मम पठनावकाशः ? यतः—

यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्याः ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्याः
गाढं निखात इव मे हृदये कटाक्षः ॥[१]

अपि च—

लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च
प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेव च ।
सा नश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभि-
श्चिन्तासंततितन्तुजालनिबिडस्यूतेव लग्ना प्रिया ॥[२]

अपि च—

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥[३]

अपि च—

प्रासादे सा दिशि दिशि च सा पृष्ठतः सा पुरः सा
पर्यंके सा पथि पथि च सा सर्वतः सा प्रिया मे ।
हंहो चेतः प्रकृतिरपरा क्वापि सा सैव सा सा
सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥[४]

राजा—(स्वयमपि पठित्वा) (स्वगतम्) किमदेयं साहित्यरसिकाय ? (प्रकाशम्) भो भोः स्वाभिलषितं प्रार्थयन्तु भवन्तः । यस्मादमोघोऽस्ति मत्प्रसादः ।

---

१. मालतीमाधवे १.३२. २. तत्रैव १०.४. ३. तत्रैव १.१३. उत्तररामचरिते च ।
४. अमरुके १०२.

CC-0.Central Sanskrit University.Digitized by eGangotri

**अखण्डानन्दः**—राजन्! यद्येवं

न तुरङ्गं न मातङ्गं न रूप्यं न च काञ्चनम्।
साहित्यमालामिच्छामि यया मे हृदयं हृतम् ॥

**राजा**—समुच्चये को विरोधः?

[गजतुरङ्गादि प्रसादीकृत्य पण्डितानां मुखमवलोकयति।]

**पण्डिताः**—(स्वगतम्) वरेणैव स्वाभिलाषः संसाधित इति सिद्धं नः समीहितम्। परं तु निर्धनैरस्माभिर्धनवतो वरस्योपचारः कथं कर्तव्यः, यथा चोक्तं-'विवादश्च विवाहश्च समयोरेव शोभते।'

[इति विषादं नाटयन्ति।]

**राजा**—(पण्डितानां विवर्णमिव मुखं विलोक्य, तेषामभिप्रायं बुद्ध्वा) भो भोः पण्डिताः संत्यजत विषादम्। स्वभगिनीविवाहाय **सकलागमाचार्यस्य** योगक्षेमाय च यथेष्टमर्थं भवन्तोऽपि गृह्णन्तु।

**पण्डिताः**—(सोल्लासम्)

अव्याधि(ना) शरीरेण मनसा च निराधिना।
पूरयन्नर्थिनामाशास्त्वं जीव शरदां शतम् ॥

**विदू०**—(सहसोत्थाय) भो भो पण्डिआ रण्णोणुग्गहेणेदाणिं ममाखंडाणंदो सहजो जादत्ति तुम्हे अम्हाणं सिआलि(ल)आ संजादा। तं खु कहं वि मग्गे मिलिदेहिं तुम्हेहिं णाहं दंसणीओ त्ति विणवेमि।

(भो भोः पण्डिताः राज्ञः अनुग्रहेण इदानीं मम अखण्डानन्दः सहजः जात इति यूयम् अस्माकं श्रृगालि(ल)काः (स्यालकाः)[1] सञ्जाताः। तत् खलु कथमपि मार्गे मिलितैः युष्माभिः नाहं दंशनीय इति विज्ञापयामि।)

---

१. अत्र 'सिआलआ'-शब्दे श्लेषः श्रृगालकाः स्यालकाश्चेति।

CC-0.Central Sanskrit University.Digitized by eGangotri

[नेपथ्ये कलकलः । पुनर्नेपथ्ये]

मसृणमुरजघोषैर्ध्वानिता राजवीथ्यः प्रतिपट्टु गणिकानां गीततालप्रचारैः ।
मुखरितककुभः किं कौतुकं व्याहरन्ति प्रमुदितमनसान्तर्धीयते विस्मयाय ॥

धन्यो राजा यत्कटाक्षलेशेनैवा(व) संभावितसाहित्यमालाविवाहः समुपस्थित एव । यतो हि गौरीपूजनार्थमेवोद्युक्ता साहित्यमाला नगरीमलंकरोति ।

[सर्वे समाकर्ण्य कौतुकाविष्टहृदयाः दर्शनोत्सुकाश्च गन्तुमिच्छन्ति ।]

**विदू०**—(तानुद्दिश्य) जाव साहित्यमाला नअरीं अलंकरोदि, दाव अहं खु पुरोहिदो तत्थ जणरहिदे घरम्मि गदुअ एदाणं सिआलिआ(लअ)वदू(हू)णं त्थण-कलसेसु णिअकररसालकिसलआं संठवेमि ।

(यावत् साहित्यमाला नगरीमलङ्करोति तावदहं खलु पुरोहितः तत्र जनरहिते गृहे गत्वा एतासां श्रृगालिका(लक) (स्यालक)वधूनां स्तनकलशेषु निजकररसालकिसलयान् संस्थापयामि ।)

**राजा**—धिङ् मूर्ख ! किं चेष्टसे ?

**विदू०**—दिट्ठा दे राजणीदी, जं मम पुरोहिदस्स वित्तिहरणं करेसि ।

(दृष्टा तव राजनीतिः, यन्मम पुरोहितस्य वृत्तिहरणं करोषि ।)

**राजा**—अहमपि प्रासादमारुह्योत्सवं पश्यामि । (इत्युत्थितः । सर्वे उत्तिष्ठन्ति ।)

**अखण्डानन्दः**—

लक्ष्मीस्ते हृदि भारती च वदने मौलौ सदा केशव-
श्चण्डी ते भुजदण्डयोर्गुणनिधे गेहे कुबेरस्थितिः ।
चित्तं धर्मरतं तवास्तु सततं दानप्रसङ्गस्सदा
सर्वे ते रिपवः प्रयान्तु विलयं त्वं दीर्घजीवी भव ॥

R. SK. S. LIBRARY
Acc. No. 1375
Class No. ............

[इति निष्क्रान्ताः सर्वे ।]

॥ विबुधमोहनं प्रहसनम् हरिजीवनमिश्रविरचितं संपूर्णम् ॥

CC-0.Central Sanskrit University.Digitized by eGangotri

13

## तिरुप्पति-केन्द्रीय-संस्कृत-विद्यापीठ-ग्रन्थावली

१. सामविधानब्राह्मणम्—सायनभरतस्वामिव्याख्याद्वयोपेतम् विद्यापीठ-निदेशकेन डा० बे. रामचन्द्रशर्मणा सम्पादितम्—विद्यापीठाध्य-क्षाणां डा० वे. राघवार्याणां भूमिकयालङ्कृतम् रू. १५

२, ३, ४ देवताध्याय-संहितोपनिषद्-वंश-ब्राह्मणानि सायनभाष्योपेतानि (संहितोपनिषद्ब्राह्मणं सायनद्विजराजभट्टव्याख्याद्वयोपेतम्) डा० रा. शर्मणा सम्पादितम् रू. १२

---

## KENDRĪYA SAMSKṚTA VIDYĀPĪṬHA SERIES

1. Sāmavidhāna Brāhmaṇa with commentaries of Sāyana and Bharatasvāmin, critically ed. by Dr. B. R. Sharma, Director, Kendrīya Saṁskṛta Vidyāpīṭha, Tirupati with Introduction etc., and with a foreword by Dr. V. Raghavan. Rs. 15-00

2, 3, 4 Devatādhyāya Brāhmaṇa with the commentary of Sāyana, Samhitopaniṣad Brāhmaṇa with the commentaries of Sāyana and Dvijarāja Bhaṭṭa and Vaṁśa Brāhmaṇa with the commentary of Sāyana. In one volume. Critically ed. by Dr. B. R. Sharma. Rs. 12-00

13

CC-0.Central Sanskrit University.Digitized by eGangotri